# युक्तिदीपिका

कुलपतेः डॉ० मण्डनमिश्रस्य 'शिवसङ्कल्प'-पुरोवाचा
पुरस्कृता

हिन्दीव्याख्याकारः सम्पादकश्च
आचार्यश्रीकेदारनाथत्रिपाठी

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

GAṄGĀNĀTHAJHĀ-GRANTHAMĀLĀ

[ Vol. 15 ]

# YUKTIDĪPIKĀ

With the Hindi Commentary
'KALĀ'

By
ĀCĀRYAŚRĪ KEDĀRANĀTHA TRIPĀṬHI

FOREWORD BY
DR. MANDAN MISHRA
VICE-CHANCELLOR

EDITED BY
ĀCĀRYAŚRĪ KEDĀRANĀTHA TRIPĀṬHĪ
Ex-Head of the Philosophy Dept.
Banaras Hindu University
Varanasi



VARANASI
1996

Research Publication Supervisor—
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.



Published under 'Revolving Fund Scheme
financed by Government of Uttar Pradesh.

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.



Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi-221 002



First Edition—500 Copies
Price Rs. 300.00



Printed by—
Mahakant Press
B 18/14, Rewari Talab
Varanasi-221 010

गङ्गानाथझा-ग्रन्थमाला

[ १५ ]

# युक्तिदीपिका

आचार्यश्रीकेदारनाथत्रिपाठिकृतया
'कला'-हिन्दीव्याख्यया

कुलपतेः डॉ० मण्डनमिश्रस्य 'शिवसङ्कल्प-' पुरोवाचा च पुरस्कृता

सम्पादकः
आचार्यश्रीकेदारनाथत्रिपाठी
दर्शनविभागाध्यक्षचरः,
काशीहिन्दूविश्वविद्यालयस्य
वाराणसी



वाराणस्याम्

२०५३ तमे वैक्रमाब्दे    १९१८ तमे शकाब्दे    १९९६ तमे ख्रैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।

उत्तर-प्रदेश-शासनेन वित्तपोषितायां
'रिवाल्विंग फण्ड'-योजनायां प्रकाशितः

प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी—२२१ ००२.

प्राप्तिस्थानम् —
विक्रय-विभागः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी—२२१ ००२.

प्रथमं संस्करणम्, ५०० प्रतिरूपाणि
मूल्यम्—३००.०० रूप्यकाणि

मुद्रकः —
महाकान्त-प्रेस
बी. १८/१४, रेवड़ी तालाब
वाराणसी—२२१ ०१०.

# शिवसङ्कल्पः

साङ्ख्यदर्शनस्य माहात्म्यं प्रभावश्च सर्वेषु शास्त्रेषु दरीदृश्यते। अस्य प्रवर्तकाः कपिलाचार्या दार्शनिकेष्वाचार्येषु मुनिषु च सुप्रतिष्ठिताः। इदं हि वैदिकेषु दर्शनेषु प्रथमगणनीयम्। अत्र च 'संख्या' अर्थात् तत्त्वज्ञानं मोक्षसाधनत्वेन स्वीकृतम्। यथोक्तं महाभारते—

"ब्रवीति परमं मोक्षं सांख्यमेतत्प्रतिष्ठितम्"। इति।

अत्र संख्याशब्देन दोषगुणानां विवेचनपूर्वकं ज्ञानमभिप्रेतम्। अयमाशयो निम्नलिखिते उद्धरणे द्रष्टुं शक्यते—

"दोषाणां च गुणानां च प्रमाणं प्रविभागतः"। इति।

सांख्यदर्शनं कापिलदर्शनत्वेन षष्टितन्त्रशास्त्रनाम्नाऽपि सुप्रसिद्धम्। "सांख्यकारिका" दर्शनस्यास्य सुसम्मतो ग्रन्थो यस्याध्ययनमध्यापनं सांख्यदर्शनस्य परिज्ञानायाधारशिलात्वेन परिगण्यते। सर्वत्र विश्वविद्यालयेषु सांख्यदर्शनस्य तत्त्वपरिचयायायं ग्रन्थः समादृतः। अस्य लेखकैः ईश्वरकृष्णाचार्यैर्भविगमीराभिर्दार्शनिकतत्त्वसम्पन्नाभिः सूक्ष्माभिः कारिकाभिः सांख्यसिद्धान्तानां यत्प्रतिष्ठापनं कृतम्,तत्सर्वथाऽनुपमम्। भगवत्पादैरादिशङ्कराचार्यैरपि स्वकीये शारीरकभाष्येऽस्याः समुल्लेखः कृतः। युक्तिदीपिकानामकं विवरणमस्याः कारिकाणां विस्तृतमधिकृतं च व्याख्यानम्। अनेन सांख्यकारिकाया गरिमा संवर्द्धितः, सांख्यतत्त्वज्ञानं च सम्पोषितम्।

अस्या व्याख्यायाः प्रथमसम्पादनं श्रीकुलीनबिहारिचक्रवर्तिभिर्विंशतिशताब्द्याश्चतुर्थदशके कृतम्, एतदनन्तरं दिल्लीविश्वविद्यालयस्याचार्यचरैर्दार्शनिकैः डॉ० रामचन्द्रपाण्डेयैरप्यस्याः सम्पादनं कृतम्।

अयमस्ति सौभाग्यस्य विषयो यदस्य विश्वविद्यालयस्य पूर्वकुलपतिभिर्विद्वद्वरेण्यैः प्रो० वि० वेङ्कटाचलम्महोदयैर्येषां प्रायशः पञ्चाशत्संख्याकानां ग्रन्थानां प्रकाशनं स्वीकृतम्, मुद्रणं च समारब्धम्, तेष्विदमपि व्याख्यानं सम्प्रति मदीये कार्यकाले विदुषां पुरस्तादहमुपस्थापयामि। एतानि सर्वाणि प्रकाशनानि तेषामवदानस्य प्रतिफलानि। अस्यै साधनायै तत्रभवद्भ्यः कुलपतिचरेभ्यः श्रीवेङ्कटाचलम्महोदयेभ्य इदंप्रथमतयाऽहं स्वकीयां कृतज्ञतां ज्ञापयामि।

ग्रन्थस्यास्य सम्पादकाः डॉ० केदारनाथत्रिपाठिमहोदयाः काशीहिन्दूविश्वविद्यालयस्य प्राच्यविद्याधर्मविज्ञानसङ्काये दर्शनविभागस्याध्यक्षा आसन्, तैश्च बहवो

ग्रन्थाः शताधिकाश्च शोधनिबन्धा लिखिताः। विद्यया विनयेन विवेकेन च संयुक्ताः श्रीत्रिपाठिमहोदया भारतराष्ट्रपतिभिर्विशिष्टसंस्कृतसेवायै सम्मानपत्रप्रदानेन पुरस्कृताः सम्प्रत्यपि वाराणस्यां शोधार्थिनां विदुषां च निर्देशनं कुर्वन्तो विराजन्त इति गौरवस्य विषयः। श्रीत्रिपाठिमहानुभावैर्न केवलमस्य सम्पादनं कृतम्; अपि त्वस्य 'कला'-नाम्नी हिन्दीव्याख्याऽपि कृता, येन सामान्यैः पण्डितैरप्येतस्य प रचयः प्राप्तुं शक्यते। अहमस्यै सफलतायै आचार्यश्रीकेदारनाथत्रिपाठिमहाशयेभ्यः स्वकीयानि वर्द्धापनानि, प्रकाशनाधिकारिणे डॉ० हरिश्चन्द्रमणित्रिपाठिने, ग्रन्थस्यास्य मुद्रकाय महाकान्त-मुद्रणालयव्यवस्थापकाय श्रीहरिकृष्णाय च शुभकामनाः समर्पयन् ग्रन्थमिमं सांख्यतत्त्वविशारदेभ्यः समुपहरामि।

वाराणसी
चैत्रपूर्णिमा,
वि०सं० २०५३
(३-४-१९९६ खैस्ताब्दः)

मण्डनमिश्रः
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# विषयानुक्रमणिका

# प्राक्कथन

सांख्यसूत्रों से भी अधिक सम्मानप्राप्त ईश्वरकृष्ण की कृति विश्वविश्रुत सांख्यकारिका है; जिसका उल्लेख भगवत्पाद आद्यशंकराचार्य ने भी अपने शारीरकभाष्य में किया है, और जिसका उल्लेख उस की युक्तिदीपिकाव्याख्या में सूत्र के नामसे हुआ है। अज्ञातकर्तृक एवं अनिर्धारितकालविशेष युक्तिदीपिका का मेरे द्वारा प्रस्तुत 'कला' नामक हिन्दीविश्लेषण के साथ प्रकाशन सम्पूर्णानन्दसंस्कृतविश्वविद्यालय ने सम्पन्न किया, एतदर्थ मुझे अत्यन्त सन्तोष एवं हार्दिक हर्ष का अनुभव हो रहा है। वस्तुतः विश्वविद्यालय ने इसका प्रकाशन स्वीकृत कर अध्येतृवर्ग एवं अन्य जिज्ञासुसमुदाय का महान् उपकार किया है और इससे मेरा भी परिश्रम सार्थक हुआ है। क्योंकि इस ग्रन्थ में हुए सूक्ष्म विचारों की गम्भीरता एवं बीच-बीच में बहुधा खण्डित एवं जगह-जगह त्रुटिपूर्ण पाठों के कारण इसकी व्याख्या एवं पाठों के संशोधन की नितान्त अपेक्षा का अनुभव विद्वत्समाज में हो रहा था। इस कठिन कार्य की निर्विघ्न पूर्णता को मैं भूतभावन करुणावतार भगवान् विश्वनाथ का अनुग्रह ही मानता हूँ। इस कार्य में अत्यन्त सावधानी वर्तने पर भी मानुष्यकनान्तरीयकदोषप्रयुक्त मेरे द्वारा भी स्खलन हो गया हो; यह सम्भव है, जिसे उदारहृदय विद्वज्जन क्षमा करेंगे और स्वयं परिमार्जन कर अनुगृहीत करेंगे।

सांख्यशास्त्र की महिमा श्रुति-स्मृति-इतिहास-पुराणों में अनेक स्थलों में वर्णित हुयी है। और इसके प्रवर्तक महामुनि कपिल का स्मरण बहुमानपुरस्पर सर्वत्र किया गया है। एक समय था, जब एकमात्र सांख्यदर्शन ने ही अवैदिकवादों का निराकरण कर वैदिकसंस्कृति की ज्योति अक्षुण्ण रखी थी। श्रुतिप्रतिपादित कर्मकाण्ड एवं ज्ञानकाण्ड दोनों की विभिन्न प्रयोजनों से उपादेयता बताते हुए ज्ञानकाण्ड की श्रेष्ठता प्रतिपादित की थी। 'तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्' ईश्वरकृष्ण के इस वचन से यह स्पष्ट है। इतना ही नहीं, सभी वैदिकदर्शनों का इसे उपज्ञास्वरूप मानने में भी कोई अतिशयोक्ति नहीं है। जबतक मुमुक्षु को अपवर्ग का हेतु प्रकृति-पुरुष का विवेकज्ञान न हो जाये; तब तक सभी लौकिक वैदिक कर्मों का अधिकारी पुरुष है और वह भी लौकिकविधानानुसार लौकिककर्म तथा श्रुत्यनुसार वैदिककर्मानुष्ठान एवं तत्त्वावबोध के लिये प्रयत्न करता है। इस प्रकार कापिलदर्शन विहितकर्मों के साथ तत्त्वज्ञान का युक्तिपूर्ण आद्य दर्शन है; इसमें सन्देह नहीं है।

यद्यपि विद्याओं के चतुर्दश या अष्टादश प्रस्थानों में सांख्यशास्त्र का साक्षात् नामोल्लेख नहीं है; तथापि 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः' यहाँ न्याय-

विस्तरपद से न्याय के समान अनेकात्मवादी वैशेषिक-सांख्य एवं योग भी संगृहीत है। संख्याशब्द से निष्पन्न सांख्यशब्द ज्ञान के अर्थ में ही मुख्यतया प्रयुक्त होता है। संख्याशब्द यद्यपि गणना और ज्ञान दोनों ही अर्थ का वाचक है; फिर भी यहाँ गणना अर्थ मुख्य नहीं है।

वर्तमान सांख्यसूत्र-सांख्यकारिकायें और उन पर हुए सांख्यतत्त्व कौमुदीयुक्ति-दीपिका-सांख्यप्रवचनभाष्य प्रभृति व्याख्याग्रन्थों के अन्तरङ्ग अध्ययन से स्पष्ट प्रतीत होता है कि कापिलदर्शन एक साथ ही पदार्थशास्त्र-प्रमाणशास्त्र और ज्ञानमीमांसा-शास्त्र तीनों ही है। इसलिये भारतीय पदार्थशास्त्र वैशेषिकदर्शन-प्रमाणशास्त्र न्याय-दर्शन तथा ज्ञानमीमांसाशास्त्र वेदान्तदर्शन इन तीनों का कापिलसांख्य आद्य स्रोत-स्वरूप है; कारण, यह सबकी अपेक्षा प्राचीनतम है।

सांख्यशास्त्र के आद्य प्रवर्तक कपिल हैं—यह श्रुति-स्मृति-इतिहास और पुराणों में प्रसिद्ध है। जैसे 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्' (श्वे० उ०), 'सांख्यस्य कर्ता कपिलः परमर्षिः स उच्यते' (म० भा० शा० पर्व) में। श्रीमद्भागवतपुराण में भी महर्षि कपिल ही सांख्य के प्रवर्तक कहे गये हैं। गरुड़-पुराण में भी कहा गया है—'पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्। प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्।' (१-१-१८) मत्स्य-स्कन्द-विष्णु पुराणों में भी सांख्यशास्त्र के कर्ता कपिल कहे गये हैं। सांख्यकारिका के रचयिता ईश्वरकृष्ण ने कपिल को मुनि और परमर्षिशब्द से स्मरण किया है। (सां० का० ६९-७०)।

गरुड़पुराण के उपर्युक्त वचन से विदित है कि सांख्यविचार पहले भी था; किन्तु वह कालविलुप्त हो गया था; जिसका पुनः प्रवर्तन महर्षिकपिल ने उपदेशों द्वारा किया और सांख्यशास्त्र इनके नाम से प्रसिद्ध हुआ। श्रुतिप्रतिपादित होने से सांख्यमत अनादिमत है, इसमें सन्देह नहीं है। प्रकारान्तर से कहा जा सकता है कि विवेकज्ञान एवं मोक्ष की दृष्टि से यह एक शाश्वत दर्शन है। क्योंकि बन्ध और मुक्ति का सम्बन्ध प्रत्येक पुरुष से है। बन्ध का कारण है—प्रत्येक का अपने और प्रकृति का अविवेक ज्ञान। और मुक्ति का कारण है—प्रत्येक का प्रकृति के साथ विवेकज्ञान। प्रत्येक बद्ध है और प्रत्येक को मुक्त होना है। न सामूहिक बन्ध है और न सामूहिक मुक्ति है। जगत् का यही शाश्वत नियम है; इसका अपवाद नहीं है। सांख्य के पुरुष-बहुत्ववाद का यही रहस्य है।

ऐतिहासिक साक्ष्य से कपिल महर्षि का तीन स्थानों से सम्बन्ध मिलता है। श्रीमद्भागवत पुराण के अनुसार हिमवत्प्रदेश में सरस्वती के तट पर बिन्दुसरोवर के समीप किसी आश्रम में कर्दम और देवहूति के पुत्ररूप में जन्म लेकर; अनन्तर कुछ काल कपिलवस्तु के समीप निवास तथा अन्त में गङ्गासागरसङ्गम पर स्थित आश्रम में वे स्थायी निवास किये थे; यह मान्यता है।

समय के सम्बन्ध में गवेषक विद्वानों द्वारा निरूपित किया जाता है कि शतपथ ब्राह्मण के संकलन से पूर्व में महर्षि कपिल का आविर्भाव हो चुका था। इस तथ्य के प्रतिपादक डॉ० आद्याप्रसादमिश्र के अनुसार महर्षि कपिल का आविर्भावकाल कम से कम पाँच हजार वर्ष पूर्व था; यह मान्यता है।

सांख्यसाहित्य में षष्टितन्त्र की बहुत प्रसिद्धि है। इसका उल्लेख ईश्वरकृष्ण ने अपनी ७२ वीं कारिका में किया है। वह है—

'सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥

तन्त्रशब्द का अर्थ है शास्त्र। अर्थात् साठ विषयों का विवेचन किये जाने के कारण इस शास्त्र का नाम षष्टितन्त्र पड़ा था। वे साठ विषय हैं— पञ्च विपर्यय-नव तुष्टियाँ-आठ सिद्धियाँ-अट्ठाइस अशक्तियाँ तथा दस मौलिक अर्थ। इनका उल्लेख वाचस्पति मिश्र ने सांख्यतत्त्वकौमुदी के अन्त में राजवार्तिक के नाम पर किया है— जैसे,

प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता ।
पारार्थ्यं च तथाऽनैक्यं वियोगो योग एव च ॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश ।
विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः ॥
करणानामसामर्थ्यमष्टाविंशतिधा मतम् ।
इति षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिः ॥ इति ॥

इस प्रकार महर्षि कपिल ने षष्टितन्त्र का उपदेश किया, यह प्रतीत होता है। यद्यपि कापिलदर्शन का प्रसिद्ध नाम सांख्यशास्त्र ही है; तथापि जैसे काणाददर्शन को विशेषपदार्थ की मान्यता के आधार पर वैशेषिकदर्शन या वैशेषिकशास्त्र कहा जाता है। वैसे ही ज्ञानमीमांसा की प्रधानता के कारण भी सांख्यशास्त्र या सांख्यदर्शन कहा जाता है। एवं, कपिलमुनि द्वारा प्रवर्तित होने के कारण कापिलदर्शन तथा षष्टि पदार्थों का निरूपण किये जाने के कारण षष्टितन्त्र (शास्त्र) नाम भी प्रसिद्ध हुये।

इस शास्त्र का उपदेश महर्षि कपिल ने आसुरि मुनि को दिया। आसुरि ने पञ्चशिखाचार्य को दिया और पञ्चशिखाचार्य ने इसका अपने समय में बहुत विस्तार किया। यह ईश्वरकृष्ण की कारिका से प्रमाणित है। आसुरि मुनि ने सांख्यसम्बन्धी कोई वचनात्मक रचना की या नहीं यह अनिर्णीत ही है; किन्तु उनके शिष्य पञ्चशिखाचार्य के कुछ वचनों के उद्धरण प्राप्त हैं; और वे सूत्ररूप में ही हैं। फिर भी उनका कोई प्रचलित ग्रन्थ उपलब्ध नहीं है। बहुत सम्भव है, लुप्त हो गया हो।

क्योंकि उनके द्वारा कोई रचित ग्रन्थ न होता तो वर्तमान में उपलब्ध वचन भी कैसे सुरक्षित रह गये।

उपर्युक्त सांख्याचार्यों के अतिरिक्त अन्य आचार्यों के नाम भी गौडपादाचार्य ने सांख्यकारिका भाष्य में उल्लिखित किये हैं—जैसे,

आसुरिः कपिलश्चैव तृतीयश्च सनातनः।
सनकश्च सनन्दश्च बोढुः पञ्चशिखस्तथा॥ इति॥

ये सात ब्रह्मा के पुत्र हैं। इनमें चार कपिल-बोढु-आसुरि और पञ्चशिख को सांख्याचार्य मानने में सभी का ऐकमत्य है। सनन्द भी सांख्याचार्य थे, यह मनुस्मृति की कुल्लूकभट्ट की टीका में कहा गया है। इनके अतिरिक्त भी पुलह पुलस्त्य मरीचि प्रभृति प्राचीन सांख्याचार्य थे, ऐसी मान्यता है। तथा उन सबों की अपेक्षा जैगीषव्य वार्षगण्य विन्ध्यवासि प्रभृति अर्वाचीन आचार्य थे। इस प्रकार चालीस सांख्याचार्य हुए कहे जाते हैं। अस्तु, इतने सांख्याचार्यों के होते हुए इस शास्त्र में ग्रन्थराशि अत्यल्प है। फिर भी जो ग्रन्थ उपलब्ध हैं, उनसे सांख्यदर्शन के साङ्गोपाङ्ग सिद्धांत सामने आ जाते हैं। इनमें सांख्यकारिका, सांख्यतत्त्वकौमुदी, युक्तिदीपिका, षड्ध्यायी सांख्यसूत्र एवं सूत्रों पर सांख्यप्रवचनभाष्य इस दर्शन के प्रकाशस्तम्भ हैं। इनमें भी सांख्यतत्त्वकौमुदी के बाद प्रस्तुत युक्तिदीपिका को विशिष्ट महत्त्व प्राप्त है। सांख्य-दर्शन में आख्यायिकाओं का उल्लेख और उनका व्याख्यान दार्शनिकदृष्टि से भले ही अत्यन्त महत्त्व का न हो, पर सांख्यविरोधी वादों की समालोचना तो अत्यावश्यक थी, जिसे युक्तिदीपिकाकार ने विस्तार के साथ की है।

ईश्वरकृष्ण की प्रतिज्ञा का ही अनुसरण करते हुए श्रीमद्वाचस्पतिमिश्र ने सांख्यतत्त्वकौमुदी में समस्त सिद्धान्तों को देते हुए जानबूझकर परवादों को छोड़ दिया था; किन्तु उन्हें भी विशदता के साथ युक्तिदीपिका में सम्मिलित कर दिये जाने से इसकी उपयोगिता और महत्ता देश-विदेश के मनीषियों द्वारा ससम्मान स्वीकृत की जा चुकी है। वाचस्पतिमिश्र ने 'ऊहः शब्दोऽध्ययनम् ··' इस कारिका की व्याख्या के प्रसङ्ग में कहा है—

'अस्य च युक्तायुक्तत्वे सूरिभिरेवावगन्तव्ये इति कृतं परदोषोद्भावनेन सिद्धान्तमात्रव्याख्यानप्रवृत्तानां नः' इति। अर्थात् हम सिद्धान्तमात्र के व्याख्यान में प्रवृत्त हैं; अतः दूसरों के मतों का दोषोद्भावन नहीं कर रहे हैं।

युक्तिदीपिकाकार ने तो आख्यायिकामात्र को ही छोड़ दिया, किन्तु सांख्य के अवान्तर भेद-प्रभेद के समस्त सिद्धान्तों को प्रकाशित करते हुये मतान्तरों का भी युक्तिपूर्ण निराकरण किया। यह युक्तिदीपिका की विशेषता है। यद्यपि षडध्यायी-सूत्रग्रन्थ में भी आख्यायिकासहित परमत-निराकरण भी मिलता है; फिर भी वह संक्षिप्त सूत्रमात्र है।

सांख्यसूत्रों पर विज्ञानभिक्षु द्वारा लिखित भाष्य में भी वह विशेषता नहीं है, जो युक्तिदीपिकाव्याख्या के अन्तर्गत पद पद में दृष्टिगोचर होती है। यह महाभाष्यकार पतञ्जलि एवं न्यायवार्तिककार उद्योतकर की शैली में अत्यन्त प्राञ्जल होती हुयी बह्वर्थगर्भित है। कारिकाओं के संक्षिप्त विषय को व्याख्या द्वारा विशद करना युक्तिदीपिकाकार का लक्ष्य था। उन्होंने सिद्धान्तमात्र को बता देना पर्याप्त नहीं समझा और सांख्य के विभिन्न आचार्यों के मतों पर भी सयुक्ति विचार प्रस्तुत किया। साथ ही सांख्यविरोधी वादों का भी यथास्थान प्रतिवाद किया है। व्याख्या का 'युक्तिदीपिका' यह नाम भी साभिप्राय है। यहाँ युक्तिपद का अर्थ है गुण अर्थात् तन्त्र के शास्त्र के गुण। शास्त्रगुणों की दीपिका प्रकाशिका यह व्याख्या है। तन्त्रगुणों को स्वयं व्याख्याकार ने प्रारम्भ में निर्दिष्ट किया है—'सूत्रप्रमाणावयवोपपत्तिः' इत्यादि श्लोक में।

कारिकाओं पर युक्तिदीपिका व्याख्या किसने लिखी यह अभी तक अज्ञात है। वस्तुतः यह तबतक अज्ञात ही रहेगा, जबतक इससे सम्बन्धित कोई शिलालेख या पाण्डुलिपि नहीं उपलब्ध हो जाती है। प्रो० रामचन्द्रपाण्डेय ने स्वसम्पादित युक्तिदीपिका की भूमिका में इसके रचयिता एवं रचनाकाल के सम्बन्ध में कुछ विचार रखा है, जो युक्तिपूर्ण एवं ग्राह्य प्रतीत होता है। यद्यपि पूनास्थित मैन्यूस्क्रिप्ट में वाचस्पतिमिश्र के युक्तिदीपिका का रचयिता होने का उल्लेख है, किन्तु उक्त उल्लेख विश्वसनीय नहीं है। क्योंकि पूना के सिवाय अन्यत्र किसी हस्तलेख प्रति में वैसा उल्लेख नहीं मिलता है। साथ ही यह सुसंगत भी नहीं प्रतीत होता है। क्योंकि कारिकाओं पर तत्त्वकौमुदीव्याख्या के बाद पुनः उन्हीं पर दूसरी व्याख्या लिखने का प्रयोजन क्या था? यदि कहा जाय कि शैलीभेद से दो व्याख्याग्रन्थ लिखे तो यह तर्क भी ठीक नहीं है; क्योंकि किसी भी ग्रन्थकार की भाषागत या निर्वचनगत दो शैली एक ही ग्रन्थ की व्याख्या में अपनायी गयी नहीं देखी जाती है। यदि ऐसा जानबूझकर उन्होंने किया होता तो उसका संकेत वे बाद की रचना में अवश्य करते। किन्तु वैसा संकेत न सांख्यतत्त्वकौमुदी में कहीं है और न युक्तिदीपिका में ही। संक्षेप और विस्तार की पद्धति यदि देखी भी जाती है तो साथ-साथ देखी जाती है, न कि पृथक् दो ग्रन्थों के रूप में। जैसे स्वयं युक्तिदीपिकाकार संक्षेप में कहने के बाद तत्काल उसका विस्तार करते हैं। युक्तिदीपिका को वार्तिक और भाष्य का सम्मिलितरूप माना जा सकता है। युक्तिदीपिकाकार कारिकाओं को सूत्र मानते हैं और उन पर उन्होंने स्वयं वार्तिक और भाष्य लिखा-ऐसा प्रतीत होता है।

एवं युक्तिदीपिका का अस्तित्व वाचस्पतिमिश्र के बहुत पूर्व में था; इसलिये भी युक्तिदीपिका के रचयिता वाचस्पतिमिश्र नहीं हो सकते। इसमें तीन महत्त्वपूर्ण कारणों का उल्लेख पाण्डेयजी ने किया है। वह यों है—

१. युक्तिदीपिका में दिङ्नागोक्त प्रत्यक्षलक्षण 'कल्पनापोढं प्रत्यक्षम्' का

उल्लेख है, किन्तु प्रत्यक्ष का धर्मकीर्ति द्वारा परिष्कृत लक्षण 'कल्पनापोढमभ्रान्तं प्रत्यक्षम्' का उल्लेख नहीं है। जबकि वाचस्पतिमिश्र ने न्यायवार्तिकतात्पर्यटीका में धर्मकीर्ति के उक्त लक्षण का उल्लेख कर उसका खण्डन किया है। अन्य परवर्ती ग्रन्थकारों ने भी धर्मकीर्ति के लक्षण को ही उद्धृत किया है। इससे यह निश्चित किया जाता है कि युक्तिदीपिका दिङ्नाग के बाद और धर्मकीर्ति के पूर्व में रची गयी थी।

२. वाचस्पतिमिश्र ने सांख्यतत्त्वकौमुदी के अन्त में राजवार्तिक के तीन श्लोकों को उद्धृत किया है। उक्त श्लोक युक्तिदीपिका के प्रारम्भ में मङ्गलाचरण के प्रसङ्ग में मिलते हैं। जब तक यह प्रमाणित न हो जाय कि युक्तिदीपिकाकार ने उन श्लोकों को किसी अन्य स्रोत से लिया है, यही मानना होगा कि वे तीनों श्लोक युक्तिदीपिकाकार के ही हैं और वहीं से वाचस्पतिमिश्र ने राजवार्तिक के नाम से अपनी तत्त्वकौमुदी में उद्धृत किया है।

३. न्यायमञ्जरीकार ने सांख्यकारिका के टीकाकार के रूप में राजा का नाम लिया है। यह टीकाकार युक्तिदीपिकाकार ही थे। इससे सिद्ध है कि न्यायमञ्जरीकार जयन्तभट्ट के समकालिक वाचस्पतिमिश्र के पूर्व ही युक्तिदीपिका टीका का अस्तित्व था और वहीं से वाचस्पतिमिश्र ने राजवार्तिक के नाम पर उक्त तीनों श्लोकों को उद्धृत किया। इस प्रकार वाचस्पतिमिश्र युक्तिदीपिका के रचयिता नहीं हो सकते और युक्तिदीपिका उनसे पूर्व की रचना है। जयन्तभट्ट के उद्धरण से मालूम होता है कि राजवार्तिक राजा का लिखा था और वह एक वार्तिक के ढंग का था, जो ईश्वरकृष्ण की सांख्यकारिका के ऊपर लिखा गया है।

किन्तु उपर्युक्त तर्क के आधार पर भी उक्त निर्णय पर पहुँचना सम्भव नहीं प्रतीत होता है कि राजवार्तिक का कर्ता कोई भूपति था। पाण्डेयजी ने भी इस मान्यता के प्रति सन्देह व्यक्त किया है कि युक्तिदीपिका का रचयिता राजा था और राजवार्तिक युक्तिदीपिका का ही नामान्तर था। ऐसी स्थिति में दूसरा और तीसरा तर्क पुष्ट नहीं सिद्ध होते हैं। साथ ही इस प्रकार के सन्देह की स्थिति में प्रथम तर्क भी पुष्ट नहीं हो पाता है। क्योंकि धर्मकीर्ति का उल्लेख नहीं होने से यदि युक्तिदीपिका के बाद धर्मकीर्ति की स्थिति मानी जाय तो युक्तिदीपिका का तत्त्वकौमुदी में स्पष्ट उल्लेख न होने से तत्त्वकौमुदी के बाद में युक्तिदीपिका की स्थिति सम्भावित होती है क्योंकि तत्त्वकौमुदी में उल्लिखित राजवार्तिक युक्तिदीपिका है—यह स्वयं में सन्दिग्ध है। साथ ही राजवार्तिक का 'युक्तिदीपिका' यह नामान्तर कब से चल पड़ा, और उसका कारण क्या था, यह भी एक विचारणीय प्रश्न हो जाता है।

युक्तिदीपिका में दिङ्नाग के वचन का उद्धरण होने से इतना निश्चितरूप से कहा जा सकता है कि दिङ्नाग (४८०-५२० ई० वर्ष) के बाद ही युक्तिदीपिका का रचनाकाल है। साथ ही धर्मकीर्ति के परिवर्धित प्रत्यक्ष-लक्षण का उल्लेख युक्ति-दीपिका में नहीं किये जाने से यह भी सिद्ध होता है कि धर्मकीर्ति (६०० ई० वर्ष) के

पूर्व में युक्तिदीपिका की रचना हुई होगी। किन्तु कितना पूर्व में यह निश्चितरूप से कहना कठिन है। इस प्रकार युक्तिदीपिका का निश्चित कर्ता और निश्चित काल दोनों ही अभी तक अज्ञात है। युक्तिदीपिका से सम्बन्धित अन्य बाह्य जानकारीहेतु पाण्डेयजी की विशिष्ट भूमिका द्रष्टव्य है। यहाँ मेरा प्रयास केवल युक्तिदीपिका के मूल पाठों का यथासम्भव निर्धारण तथा उनके अभिप्रायों का अभिव्यक्तीकरणमात्र है। इस कार्य में मैं कहाँ तक सफल हो सका हूँ, इसमें विद्वज्जन ही प्रमाण हैं।

सांख्यकारिका की युक्तिदीपिकाव्याख्या की विशिष्टता का अनुभव करते हुए श्रीपुलिनविहारीचक्रवर्ती ने इस शताब्दी के चतुर्थ दशक में युक्तिदीपिका के साथ सांख्यकारिका का प्रथम प्रकाशन किया था। उक्त प्रकाशन के पूर्व इस टीका की जानकारी बहुत ही कम थी। सांख्यसाहित्य के क्रम में चक्रवर्तीमहोदय का यह अत्यन्त महत्त्वपूर्ण कार्य हुआ है। उनके अनन्तर दिल्लीविश्वविद्यालय के तत्कालीन प्रोफेसर डॉ० रामचन्द्र पाण्डेय ने अनेक स्रोतों से पाण्डुलिपि आदि सामग्री को प्राप्त कर उनके आधार पर युक्तिदीपिका का प्रामाणिक संस्करण टिप्पणियों के साथ प्रस्तुत कर दार्शनिक जगत् का विशेषतः सांख्यदर्शन का बहुत उपकार किया है। एतदर्थ वे भूरि-भूरि धन्यवादार्ह हैं। यद्यपि पाण्डेय जी ने पाठों की त्रुटि को दूर करने का स्तुत्य प्रयास किया है; फिर भी अनेक खण्डित एवं संदिग्ध पाठों का निर्धारण शेष ही रह गया था; जिसकी औचित्यपूर्ण यथासम्भव पूर्ति करना भी मैंने अपनी इस व्याख्या का ही अङ्ग माना। जहाँ-जहाँ मैंने यह पूर्ति एवं पाठनिर्णय का कार्य किया है; वहाँ-वहाँ टिप्पणी में अंकित कर दिया है, और कहीं-कहीं पूर्व मुद्रित यथास्थित पाठ के साथ ही कोष्ठक में उल्लिखित कर दिया हैं। और वह खण्डित की पूर्ति एवं पाठ का निर्धारण मैंने अपनी दृष्टि से किया है। इसके युक्तत्व-अयुक्तत्व का निर्णय विद्वज्जन ही करेंगे।

इस ग्रन्थ में नवम आह्निक युक्तिदीपिका की समाप्ति का उल्लेख हुआ है। उसके अनन्तर दशम आह्निक का होना स्वतः सिद्ध है। अतः उसकी भी समाप्ति को सूचित करने वाली पुष्पिका का उल्लेख कहीं अवश्य होना चाहिये। तभी उसके बाद का आह्निक ग्यारहवाँ होगा और तभी ग्रन्थ के अन्त में ग्यारहवें आह्निक की समाप्ति का उल्लेख संगत होगा। किन्तु वैसा हुए बिना ही ग्रन्थ के अन्त में 'इति युक्तिदीपिकायां सांख्यसप्ततिपद्धतौ चतुर्थं प्रकरणमेकादशं चाह्निकं सम्पूर्णम्' ऐसा उल्लेख मिलता है। अतः प्रतीत होता है कि ५९ वीं कारिका की युक्तिदीपिका 'अत्र च ··· ···' इस उल्लेख के बाद खण्डित है। साथ ही ६०-६३ तथा ६५-६६ इन कारिकाओं की पूरी युक्तिदीपिका खण्डित है।

ऐसी स्थिति में अत्यन्त सम्भावित है कि इन्हीं कारिकाओं की खण्डित युक्तिदीपिका के मध्य कहीं दशम आह्निक की समाप्ति हुई हो। तभी अन्त में एकादश आह्निक की समाप्ति का उल्लेख सुसंगत हो सकता है। अथवा यह सम्भव है कि

सम्पूर्ण युक्तिदीपिकाग्रन्थ दस ही आह्निक का हो और प्रमाद से अन्त में एकादशवें आह्निक की समाप्ति का उल्लेख हो गया हो। यहाँ प्रथम पक्ष ही अधिक युक्त प्रतीत होता है। इस प्रसङ्ग में आधारभूत निश्चित प्रमाण के अभाव में हमने स्वरसतः प्राप्त दशम आह्निक का ही निर्देश रहने दिया है।

ग्रन्थ में खण्डित एवं सन्दिग्ध पाठ के कारण तथा पठन-पाठन में विशेष न आने के कारण सर्वसाधारण के लिये 'युक्तिदीपिका के दुरूह होने से तथा विभिन्न विश्वविद्यालयों में पाठ्यग्रन्थ के रूप में निर्धारित होने से उसकी सुगम व्याख्या अत्यन्त अपेक्षित थी। इस आवश्यकता की पूर्ति करना बहुत वर्षों से, विशेषतः जब मैं काशी हिन्दू विश्वविद्यालत के दर्शनविभाग में नियुक्त होकर काशी आया, मेरा अभीष्ट रहा था। विश्वविद्यालयअनुदानआयोग का प्रोत्साहन पाकर मैंने इसे पूर्ण करने का प्रयास किया। मेरे इस कार्य से यदि विद्वद्वर्ग को सन्तोष एवं अध्येतावर्ग को लाभ हुआ तो मैं अपने को कृतार्थ मानूँगा तथा अपना परिश्रम सफल समझूँगा।

इस कार्य में जिन विद्वानों की कृतियों का मुझे सहयोग प्राप्त हुआ, उन सभी के प्रति हार्दिक आभार प्रकट करता हूँ। साथ ही केन्द्रीय पुस्तकालयाध्यक्ष का० हि० वि० वि० का एवं सरस्वती भवन पुस्तकालयाध्यक्ष, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय का अत्यन्त आभारी हूँ, जिन्होंने इस कार्य से सम्बन्धित पुस्तकों के दुर्लभ संस्करण प्रदान कर सहयोग प्रदान किया।

अन्ततः सम्पूर्णानन्दसंस्कृतविश्वविद्यालय के कुलपति प्रो० वेङ्कटाचलम् महोदय का मैं अत्यन्त कृतज्ञ हूँ, जिन्होंने मेरी प्रार्थना स्वीकार कर इसके प्रकाशन का गुरुतर कार्य सम्पन्न कराया। एवं विद्वत् कुलभूषण प्रो० वेङ्कटाचलम् महोदय के द्वारा स्वीकृत एवं मुद्रण की पूर्णता को प्राप्त यह ग्रन्थ इस विश्वविद्यालय के वर्तमान कुलपति अनेक संस्कृतविद्यासंस्थानों के जीवातुभूत स्वनामधन्य डॉ० मण्डनमिश्र महानुभाव के शुभागमन के साथ प्रकाशन को प्राप्त किया है, इसमें अपना द्विगुणित हुआ सौभाग्य मानता हूँ। इस विश्वविद्यालय के प्रकाशनाधिकारी डॉ० श्रीहरिश्चन्द्रमणि त्रिपाठी के प्रति भी सधन्यवाद आभार व्यक्त करता हूँ, जिनके कुशल निर्देशन में प्रकाशन का कार्य सम्पन्न हुआ है। साथ ही काशीहिन्दूविश्वविद्यालय में संस्कृतविद्याधर्मविज्ञानसंकाय के वैदिकदर्शनविभाग में सांख्ययोगविषय के वर्तमान सुयोग्य एवं उत्साही रीडर डॉ० श्री कृष्णकान्त शर्मा को भी साशीर्वाद सधन्यवाद अपनी हार्दिक शुभकामना व्यक्त करता हूँ, जिन्होंने अपने व्यस्त कार्यक्रम के साथ ही मेरी अनुपस्थिति में पूर्वरूपसंशोधन का कार्य सम्भालकर मुद्रणकार्य में निरन्तरता बनाये रखा। इस सन्दर्भ में महाकान्तप्रेस के कार्यकर्तागण को भी धन्यवाद है, जिन्होंने लगन के साथ अल्पावधि में इस वृहद् ग्रन्थ का मुद्रण सम्पन्न किया।

फा० कृ० ११, २०५२
दि० १९-२-९६

केदारनाथत्रिपाठी
व्याख्याकार

॥ श्रीगणेशाय नमः ॥

# युक्तिदीपिका

[ सटिप्पणकलोपेता ]

## प्रथमाह्निकम्



### मङ्गलानि

वीतावीतविषाणस्य पक्षतावनसेविनः ।
प्रवादाः सांख्यकरिणः सल्लकीषण्डभङ्गुराः ॥ १ ॥
ऋषये परमायार्कमरीचिसमतेजसे ।
संसारगहनध्वान्तसूर्याय गुरवे नमः ॥ ॥ २ ॥
तत्त्वं जिज्ञासमानाय विप्रायासुरये मुनिः ।
यदुवाच महत्तन्त्रं दुःखत्रयनिवृत्तये ॥ ३ ॥
न तस्याधिगमः शक्यः कर्तुं वर्षशतैरपि ।
भूयस्त्वादिति सञ्चिन्त्य मुनिभिः सूक्ष्मबुद्धिभिः ॥ ४ ॥

---

### 'कला' हिन्दी-व्याख्या

नत्वेशकपिलाचार्यान् विश्रुतां युक्तिदीपिकाम् ।
कलाव्याख्यामिषेणाहं कर्तुमीहे सुनिर्मलाम् ॥

वीत और अवीत नामक दो प्रकार के अनुमान ही जिसके दो विषाण (दन्त) हैं तथा जो पक्षतारूपी वन का सेवन करनेवाला है, ऐसे सांख्यरूपी हाथी के सल्लकी समूह के समान अन्य वादों का भङ्ग (मर्दन) कर देने वाले सर्वोत्कृष्ट प्रवाद अर्थात् सिद्धान्तरूपी गर्जन विराजमान हैं ॥ १ ॥

सूर्य की किरणों के समान तेज को धारण करनेवाले तथा संसाररूपी घोर अन्धकार को नष्ट करने में सूर्यस्वरूप परमर्षि (तत्त्वद्रष्टा) गुरुदेव को नमस्कार है ॥२॥

कपिलमुनि ने जिस महान् सांख्यशास्त्र का तत्त्व के जिज्ञासु आसुरिनामक विप्र को आध्यात्मिक, आधिदैविक तथा अधिभौतिक त्रिविध दुःखों की निवृत्ति के लिए उपदेश किया था ॥ ३ ॥

ग्रन्थेनाल्पेन संक्षिप्य तदार्षमनुशासनम् ।
निबद्धममलप्रज्ञैः शिष्याणां हितकाम्यया ॥ ५ ॥

प्रतिपक्षाः पुनस्तस्य पुरुषेशाणुवादिनः ।
वैनाशिकाः प्राकृतिका विकारपुरुषास्तथा ॥ ६ ॥

तेषामिच्छाविघातार्थमाचार्यैः सूक्ष्मबुद्धिभिः ।
रचिताः स्वेषु तन्त्रेषु विषमास्तर्कगह्वराः ॥ ७ ॥

शिष्यैर्दुरवगाहास्ते तत्त्वार्थभ्रान्तबुद्धिभिः ।
तस्मादीश्वरकृष्णेन संक्षिप्तार्थमिदं कृतम् ॥ ८ ॥

सप्तत्याख्यं प्रकरणं सकलं शास्त्रमेव वा ।
यस्मात् सर्वपदार्थानामिह व्याख्या करिष्यते ॥ ९ ॥

प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता ।
पारार्थ्यञ्च तथाऽनैक्यं वियोगो योग एव च ॥ १० ॥

---

उस शास्त्र का सम्यक् बोध सैकड़ों वर्षों में भी करना अशक्य है; क्योंकि वह अत्यन्त विस्तृत शास्त्र है, यह सोचकर सूक्ष्मबुद्धि वाले (निर्मलप्रज्ञा वाले) मुनियों के द्वारा स्वल्पग्रन्थ के रूप में संक्षिप्त करके ऋषिप्रणीत उस अनुशासन को शिष्यों के हित की कामना से निबद्ध किया गया ॥ ४-५ ॥

उस सांख्यशास्त्र के मुख्य प्रतिपक्षी हैं—ईश्वर के रूपमें पुरुष को मानने वाले, परमाणुवादी वैशेषिक, बौद्ध, प्रकृतिमात्र को मानने वाले जड़वादी चार्वाक तथा विकारी पुरुष मानने वाले जैन आदि ॥ ६ ॥

उन प्रतिपक्षियों के अभीष्ट मन्तव्यों को निरस्त करने के लिए सूक्ष्मबुद्धि वाले आचार्यों ने अपने शास्त्रों में तर्करूपी दुर्गम कन्दराओं की रचना की थी ॥ ७ ॥

वे तर्कतत्त्वार्थ के सम्बन्ध में भ्रान्तबुद्धि वाले शिष्यों के द्वारा सरलतापूर्वक अवगाहन करने योग्य नहीं हैं, इसलिए ईश्वरकृष्ण ने यह संक्षिप्त अर्थ वाला सांख्य-सप्तति नामक प्रकरणग्रन्थ रचा अथवा सांख्यसम्बन्धी पूर्ण शास्त्र ही रचा; क्योंकि इस ग्रन्थ में सभी पदार्थों की व्याख्या उनके द्वारा की जायगी ॥ ८-९ ॥

(१) प्रधान का अस्तित्व, (२) एकत्व, (३) अर्थवत्त्व, (४) अन्यता अर्थात् भेद, (५) परार्थत्व,(६)पुरुष का अनेकत्व,(७) वियोग,(८) योग,(९) शेषवृत्ति तथा (१०)पुरुष

शेषवृत्तिरकर्तृत्वं चूलिकार्थाः स्मृता दश ।
विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः ॥ ११ ॥

करणानामसामर्थ्यमष्टाविंशतिधा मतम् ।
इति षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिः ॥ १२ ॥

यथाक्रमं लक्षणतः कार्त्स्न्येनेहाभिधास्यते ।
तस्मादतः शास्त्रमिदमलं नानात्वसिद्धये ॥ १३ ॥

अल्पग्रन्थमनल्पार्थं सर्वैस्तन्त्रगुणैर्युतम् ।
पारमर्षस्य तन्त्रस्य बिम्बमादर्शगं यथा ॥ १४ ॥

तस्य व्याख्यां करिष्यामि यथान्यायोपपत्तये ।
कारुण्यादप्ययुक्तां तां प्रतिगृह्णन्तु सूरयः ॥ १५ ॥

आह—करिष्यति भवान् व्याख्याम् । इदं त्वावावुपन्यस्तं सर्वैस्तन्त्रगुणैर्युतमिदं तन्त्रमिति । के तन्त्रगुणाः, कियन्तो वेति ?

---

का अकर्तृत्व ये सांख्य के दश चूलिकार्थ या मूलिकार्थ अर्थात् मौलिक पदार्थ हैं । पाँच प्रकारके विपर्यय हैं, तथा तुष्टि नौ प्रकारकी कही गई है ॥ १०-११ ॥

करणों की अशक्ति अट्ठाईस प्रकार की मानी गई है । इस प्रकार आठ सिद्धियों सहित उपर्युक्त पदार्थों की साठ संख्या है ॥ १२ ॥

इस ग्रन्थ में उपर्युक्त साठ पदार्थ लक्षणों के साथ समग्ररूप में क्रमशः कहे जायेंगे । इस हेतु नानात्वसिद्धि के लिए यह शास्त्र समर्थ है ॥ १३ ॥

अल्पशब्दवाला; किन्तु बहुत अर्थ को धारण करने वाला एवं शास्त्र के सभी गुणों से परिपूर्ण यह सप्ततिनामक शास्त्र कपिलमुनि के शास्त्र का प्रतिबिम्बरूप है । अर्थात् जैसे दर्पण के अन्तर्गत प्रतिबिम्बित होकर मुख भासमान होता है, वैसे ही इसके अन्तर्गत कपिलमुनि का सम्पूर्ण शास्त्र प्रतिबिम्बित होकर भासमान है ॥ १४ ॥

न्यायानुसार सिद्धि के लिए उसकी व्याख्या करूँगा । विद्वान् जन अयुक्त भी उस व्याख्या को करुणापूर्वक स्वीकार करें ॥ १५ ॥

प्रतिवादी—आप व्याख्या करने जा रहे हैं । यह तो आपने प्रारम्भ में कहा है कि यह शास्त्र सभी तन्त्रगुणों से युक्त है । वे तन्त्रगुण कौन हैं और कितने हैं ? इसे बतावें ।

उच्यते—

सूत्रप्रमाणावयवोपपत्तिरन्यूनता संशयनिर्णयोक्तिः ।
उद्देशनिर्देशमनुक्रमश्च संज्ञोपदेशाविह तन्त्रसम्पत् ॥

सूत्राणि च प्रमाणानि च अवयवाश्च सूत्रप्रमाणावयवाः, तेषाम् उपपत्तिः सूत्रप्रमाणावयवोपपत्तिः । उपपत्तिः सम्भव इत्यनर्थान्तरम् । अनन्योऽर्थोऽनर्थान्तरम् । उपपत्तिशब्दः प्रत्येकं परिसमाप्यते सूत्रोपपत्तिरित्यादि ।

आह— लक्षणोपेतसूत्रोपपत्तिरिति वक्तव्यम्, इतरथा हि अलक्षणोपेतस्यापि सूत्रस्य तन्त्राङ्गभावः स्यादिति ।

उच्यते— न, नान्तरीयकत्वात् । न ह्यन्तरेण लक्षणोपेतत्वं सूत्रत्वम् । अतो न वक्तव्यमेतदिति ।

---

वादी—कहा जा रहा है ।

सूत्र, प्रमाण एवं अवयवों की उपपत्ति, अन्यूनता, संशय और निर्णय का कथन, उद्देश और निर्देश, अनुक्रम, संज्ञा और उपदेश, ये ग्यारह तन्त्र के गुण हैं । 'इह' शब्द के स्थान पर कहीं 'इति' शब्द का पाठ है[1] । उसके अनुसार ग्यारह गुणों के अतिरिक्त इसी प्रकार के और भी तन्त्र के गुण हैं, यह बात सूचित होती है ।

'सूत्राणि च प्रमाणानि च अवयवाश्च सूत्रप्रमाणावयवाः' यहाँ द्वन्द्व समास है । इनकी उपपत्ति अर्थात् सम्भव या प्राप्ति सूत्र, प्रमाण और अवयव की उपपत्ति है । उपपत्ति और सम्भव या प्राप्ति यह एक ही अर्थ है । अनन्य अर्थात् अभिन्न अर्थ को अनर्थान्तर कहते हैं । श्लोक में आये उपपत्तिशब्द का सम्बन्ध सूत्र,प्रमाण और अवयव प्रत्येक के साथ है । इससे सूत्रोपपत्ति, प्रमाणोपपत्ति और अवयवोपपत्ति इस त्रिविध उपपत्ति का बोध होता है ।

प्रतिवादी— 'लक्षणोपेतसूत्रोपपत्ति' ऐसा कहना चाहिए । यदि ऐसा नहीं कहा जाय तो जो सूत्र लक्षणोपेत नहीं है, वह भी तन्त्र का अङ्ग होने लगेगा ।

वादी— 'लक्षणोपेत' ऐसा कहने की आवश्यकता नहीं हैं; क्योंकि लक्षण और सूत्र में अविनाभाव सम्बन्ध है । कारण, लक्षण से युक्त हुए बिना सूत्र होता ही नहीं है । अतः लक्षणोपेत, ऐसा कहने की आवश्यकता नहीं है ।

---

१. युक्तिदीपिका (पृ० २२) श्रीपुलिनविहारी चक्रवर्ती ।

आह—अथ सूत्रमिति कस्मात् ?

उच्यते—सूचनात् सूत्रम् । सूचयति तांस्तानर्थविशेषानिति सूत्रम् । तद्यथा—कारणमस्त्यव्यक्तम् (का० १६) भेदानां परिमाणादिति (का० १५) ।

अत्र प्रतिज्ञाहेतू कण्ठोक्तौ । तयोरुपयोगिदृष्टान्तं साध्यसिद्धये समर्थमिति कृत्वा मूलशकलादयोऽत्रान्तरमनभिहिता अप्येतस्मादवसीयन्ते ।

अथवा भिक्षोरुपसंहृतबहिष्करणान्तःकरणस्य तेषु तेष्वतीन्द्रियेषु अपि प्रधानादिष्वर्थेषु बुद्धिं सूचयतीति सूत्रम् ।

अथवा, सौक्ष्म्यात्तदनुपपत्तिरिति (का० ८) सूत्रम् । तद्यथा—

'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः' ॥

अस्तोभमपुनरुक्तमित्यर्थः ।

---

जिज्ञासा— यहाँ सूत्र का अभिप्राय क्या है ?

समाधान— सूचित करने के कारण सूत्र कहा जाता है । अर्थात् जो उन-उन विशिष्ट अर्थों को सूचित करे वह सूत्र है । जैसे 'कारणमस्त्यव्यक्तम्' यह, तथा 'भेदानां परिमाणात्' इत्यादि अंश सूत्र है ।

उपर्युक्त सूत्रों में प्रतिज्ञा और हेतु कंठ से कह दिये गये हैं । एवं उनका उपयोगी दृष्टान्त साध्य की सिद्धि में समर्थ है । इस कारण मूल-शकल आदि दृष्टान्त यहाँ मध्य में नहीं कहे जाने पर भी जान लिये जाते हैं ।

अथवा जिसने बहिरिन्द्रियों को और अन्तःकरणों को वशीभूत कर लिया है, ऐसे भिक्षुको अर्थात् योगी को प्रधान आदि उन-उन अतीन्द्रिय विषयों में भी बुद्धि होती है । इस बात को सूचित करने के कारण सूत्र कहा जाता है ।

अथवा, 'सौक्ष्म्यात्तदनुपपत्तिः' यह सूत्र है । जैसा कि सूत्र का स्वरूप बताया गया है ।

सूत्र के ज्ञाता आचार्य 'अल्पाक्षरम्' अर्थात् जिसमें कम अक्षर हों और असन्दिग्ध हो, सारगर्भित हो, 'विश्वतोमुखम्' अर्थात् व्यापक अर्थ वाला हो, 'अस्तोभम्' अर्थात् पुनरुक्ति से रहित हो तथा निर्दोष हो, उसे सूत्र मानते हैं ।

'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः ॥

प्रमाणानि च प्रत्यक्षादीनि, तान्युत्तरत्र वक्ष्यति। दृष्टमनुमानमाप्तवचनञ्च (का० ४) प्रतिविषयाध्यवसायो दृष्टमित्यादि (का० ५)।

अवयवाः पुनर्जिज्ञासादयः प्रतिज्ञादयश्च। तत्र जिज्ञासादयो व्याख्याङ्गम्। प्रतिज्ञादयः परप्रत्यायनाङ्गम्। तानुत्तरत्र वक्ष्यामः।

आह— अवयवानभिधानमनुपदेशात्। न हि यथा प्रत्यक्षादीनि प्रमाणान्युपदिष्टानि तथा अवयवा उपदिष्टाः। तस्मादवयवोपपत्तिरित्येतदसत्।

भाष्यकारप्रामाण्याददोष इति चेत् स्यान्मतम्। यद्यपि सूत्रकारेणावयवोपदेशो न कृतस्तथाऽपि भाष्यकाराः केचिदेषां संग्रहं चक्रुः। ते च नः प्रमाणम्। तस्माद्युक्तमवयवोपपत्तिरिति।

---

विद्वान् जन स्वरूपतः लघु आकार वाले तथा अर्थ को सूचित करने वाले कम अक्षर और पदवाले तथा सर्वतोभावेन जो सारभूत हैं, उन्हें सूत्र कहते हैं।

प्रत्यक्ष अनुमान और आगम ये तीन प्रमाण हैं। इन्हें आचार्य 'दृष्टमनुमानमाप्तवचनञ्च', 'प्रतिविषयाध्यवसायो दृष्टम्' इत्यादि कारिकाओं द्वारा आगे कहेंगे।

जिज्ञासा आदि तथा प्रतिज्ञा आदि अवयव हैं। इनमें जिज्ञासा आदि अवयव व्याख्या के अङ्ग हैं तथा प्रतिज्ञा आदि अवयव दूसरों को बोध कराने में अङ्गभूत हैं। उनका निरूपण आगे करेंगे। अर्थात् छठीं कारिका के व्याख्यान में वहाँ जिज्ञासादिपद से जिज्ञासा, संशय, प्रयोजन और शक्यप्राप्ति ये चार लिये गये हैं। प्रतिज्ञादिपद से प्रतिज्ञा, हेतु, उदाहरण, उपनय और निगमन ये पाँच अवयव विवक्षित हैं।

प्रतिवादी—तन्त्र-गुणों के अन्तर्गत अवयवों का अभिधान नहीं करना चाहिए; क्योंकि इस सांख्यशास्त्र के अन्तर्गत आगे अवयवों का उपदेश नहीं किया गया है। अर्थात् इस शास्त्र में जैसे प्रत्यक्षादि प्रमाणों का उपदेश किया गया है, वैसे अवयवों का उपदेश नहीं किया गया है। इसलिये अवयवोपपत्ति शास्त्र का अङ्ग है, यह कथन असत् है।

सिद्धान्ती (वादी)—यद्यपि सूत्रकार ने अवयवों का उपदेश नहीं किया है, तथापि कोई भाष्यकार अवयवों का उपदेश किये हैं, और ये भाष्यकार हमारे लिये प्रमाण हैं, इसलिये अवयवोपपत्ति को शास्त्र का अङ्ग बताना उचित ही है।

एतच्चायुक्तम् । कस्मात् ? उत्सूत्रत्वात् । नह्युत्सूत्रं व्याचक्षाणा भाष्यकाराः प्रमाणं भवन्ति । तथा चैतदुत्सूत्रितमिति ।

उच्यते—न, लिङ्गात् । नैतद्युक्तमनुपदेशान्न सन्ति जिज्ञासादयः । किं तर्ह्यनुपदिष्टमप्येषामस्तित्वं लिङ्गात् प्रतिपद्यामहे, यदयमाचार्यो दुःख-त्रयाभिघाताज्जिज्ञासा तदपघातके हेताविति (का० १) जिज्ञासाप्रयोजन-माचष्टे । कारणमस्त्यव्यक्तमिति (का० १६) प्रतिज्ञां करोति । भेदानां परिमाणादिति (का० १५) हेतुमुपदिशति । नटवद् व्यवतिष्ठते लिङ्ग-मिति (का० ४२) दृष्टान्तं द्योतयति । क्षीरस्य यथा, तथा प्रवृत्तिः प्रधा-नस्य (का० ५७) इत्युपसंहरति । तस्मात् त्रिविधं करणं द्वारीति (का० ३५) निगमयति । न चानभिप्रेतैराचार्याणां शास्त्रे व्यवहारो लक्ष्यते । तेन वयं लिङ्गात्प्रतिपद्यामहे, सन्ति जिज्ञासादयोऽवयवाः शास्त्र इति ।

आह— सतामनुपदेशे प्रयोजनवचनम् । एवं चेन्मन्यसे सन्ति

---

प्रतिवादी— भाष्यकार के प्रमाण से अवयवोपपत्ति को शास्त्र का अङ्ग बताना अयुक्त है; क्योंकि भाष्यकार का व्याख्यान सूत्र से बहिर्भूत है । अतः सूत्र की सीमा का उल्लंघन कर व्याख्यान करने वाले भाष्यकार प्रमाण नहीं हो सकते और किसी भी भाष्यकार द्वारा किया गया अवयव का व्याख्यान सूत्रबहिर्भूत है ।

सिद्धान्ती (वादी)— प्रतिवादी का उक्त कथन युक्त नहीं है; क्योंकि लिङ्ग से विदित होता है कि शास्त्रकार को अवयवोपपत्ति भी शास्त्र का अङ्गरूप में अभीष्ट है । अर्थात् उपदेश नहीं होने से जिज्ञासा आदि अवयव शास्त्राङ्ग नहीं हैं, यह प्रतिवादी का कथन युक्त नहीं है । बल्कि उपदेश न होने पर भी लिङ्ग द्वारा अवयवों का अस्तित्व समझ लेते हैं । इसीलिये यह आचार्य 'दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ' इस कारिका में जिज्ञासा और प्रयोजन का कथन करते हैं । एवं 'कारणमस्त्य-व्यक्तम्' यह प्रतिज्ञा करते हैं 'भेदानां परिमाणात्' यह हेतु का उपदेश करते हैं । 'नट-वद् व्यवतिष्ठते लिङ्गम्' यहाँ दृष्टान्त को बताते हैं ।'क्षीरस्य यथा, तथा प्रवृत्तिः प्रधा-नस्य' इसके द्वारा उपसंहार करते हैं । तथा 'तस्मात् त्रिविधं करणं द्वारि' इसके द्वारा निगमन करते हैं । जो विषय अभीष्ट नहीं होते, उनके द्वारा शास्त्र में आचार्यों का व्यवहार नहीं देखा जाता है । इसलिये हम लिङ्ग द्वारा जानते हैं कि जिज्ञासा आदि अवयव शास्त्र के अङ्ग हैं ।

प्रतिवादी— जो वस्तु है, उसका उपदेश न करने का प्रयोजन बताना चाहिए ।

जिज्ञासादयोऽवयवाः, शास्त्रे तेषामनुपदेशे प्रयोजनं वक्तव्यम्—अमुष्माद्धेतोराचार्येण नोपदिश्यन्ते, सन्ति च ते इति।

उच्यते— प्रमाणान्तर्भावात्। प्रमाणेष्वन्तर्भाव एषामित्ययमुपदिष्टो हेतुरस्माभिः। अनुमानाङ्गं हि जिज्ञासादयः, तस्मात्तदन्तर्भूतास्ते इति न पृथगुपदिश्यन्ते। किञ्च, तन्त्रान्तरेषु हि विन्ध्यवासिप्रभृतिभिराचार्यैरुपदिष्टाः। प्रमाणं च नस्ते आचार्या इत्यतश्चानुपदेशो जिज्ञासादीनामिति।

आह— न, प्रमाणानुपदेशप्रसङ्गात्। यदि च तन्त्रान्तरोपदेशादेवावयवानामनुपदेशः, प्रत्यक्षादीन्यपि च तन्त्रान्तरेषूपदिश्यन्ते। श्रोत्रादिवृत्तिः प्रत्यक्षम्। सम्बन्धादेकस्माच्छेषसिद्धिरनुमानम्। यो यत्राभियुक्तः कर्मणि चादुष्टस्स तत्राप्तस्तस्योपदेश आप्तवचनमिति तेषामप्यनुपदेश-

---

अर्थात् यदि आप यह मानते हैं कि जिज्ञासा आदि अवयव हैं, तो उनका शास्त्र में उपदेश न करने का प्रयोजन बताना चाहिए कि इस कारण से आचार्य ने उनका उपदेश नहीं किया, यद्यपि वे हैं।

सिद्धान्ती (वादी)— जिज्ञासा आदि का प्रमाण के अन्तर्गत अन्तर्भाव होने से अवयवों का शास्त्र में पृथक् उपदेश नहीं हुआ। अर्थात् प्रमाणों में इनका अन्तर्भाव है, यही हेतु हमारे द्वारा कहा गया है; क्योंकि जिज्ञासा आदि अवयव अनुमान के अङ्ग हैं, इसलिये वे उसी में अन्तर्भूत हैं। यही कारण है कि उनका पृथक् उपदेश आचार्य द्वारा नहीं किया गया है।

अन्य तन्त्रों में उन अवयवों का कथन भी हो चुका है। अर्थात् विन्ध्यवासी प्रभृति आचार्यों के द्वारा वे अन्य तन्त्रों में उपदिष्ट हो चुके हैं। और वे आचार्य हमारे प्रमाणभूत हैं। इस हेतु से भी जिज्ञासादि अवयवोंका आचार्य ने इस शास्त्र में उपदेश नहीं किया।

प्रतिवादी—उक्त हेतुओं से अवयवों का उपदेश नहीं किया, यह कथन ठीक नहीं है; क्योंकि तब प्रमाणों का भी उपदेश आचार्य को नहीं करना चाहिए। अर्थात् तन्त्रान्तर में उपदेश होने के कारण यदि अवयवों का इस शास्त्र में उपदेश न हो, तो प्रत्यक्षादि प्रमाण भी तन्त्रान्तर में उपदिष्ट हैं। जैसे—श्रोत्र आदि इन्द्रियों की वृत्ति प्रत्यक्ष है। व्याप्तिरूप सम्बन्ध के बल से एक को देखकर शेष की सिद्धि कर लेना अनुमान है। जो व्यक्ति जिस विषय में प्रमाण है तथा कर्म के सम्बन्ध में दोषरहित है, वह उसमें आप्त कहा जाता है और उसके द्वारा किया गया उपदेश आप्तवचन प्रमाण है। ऐसा अन्य शास्त्रों में आचार्य ने उपदेश किया है। ऐसी स्थिति में प्रत्यक्षादि प्रमाणों का भी यहाँ उपदेश नहीं करना चाहिए। यदि कहो कि अन्य शास्त्रों में

प्रसङ्गः। अथ सति तन्त्रान्तरोपदेशे प्रमाणान्युपदिश्यन्ते नावयवा इति, नन्वेतदिच्छामात्रमिति।

उच्यते—पूर्व एव तर्हि परिहारोऽस्तु। अथवा पुनरस्तु तन्त्रान्तरोपपत्तेरित्ययमपि परिहारः।

यत्तूक्तं प्रमाणानुपदेशप्रसङ्ग इति, अत्र ब्रूमः—

अयुक्तमेतत्। कस्मात्? प्रयोजनवतामुपदेशस्यादोषत्वात्। अनुपदेशो हि प्रयोजनवतश्चोद्यत इति युक्तमेतत्। उपदेशमेव तु सदोष इति कृत्वा कः प्रत्याचक्षीत? तस्मान्न किञ्चिदेतत्।

किञ्चान्यत्, प्रधानोपदेशे गुणभूतान्तर्भावसिद्धेः। तद्यथा, तक्ष्णुहि चैत्र इत्युक्ते यावद्भिस्साधनविशेषैर्विना तक्षणं नोपपद्यते सर्वांस्तांश्चैत्र

---

उपदेश होने पर भी प्रमाणों का उपदेश आचर्य ने किया; किन्तु अवयवों का नहीं किया, तो यह आचार्य की इच्छामात्र हुई, अर्थात् यह आचार्य का प्रौढिवाद है।

वादी—यहाँ पहला ही परिहार होगा। अर्थात् प्रमाणों में अन्तर्भूत होने के कारण जिज्ञासादि अवयवों का पृथक् उपदेश नहीं किया। अथवा यह भी परिहार हो सकता है कि अवयवों का विचार अन्य तन्त्रों में किया जा चुका है। इसलिये भी आचार्य ने इस शास्त्र में उनका उपदेश नहीं किया।

यह जो कहा कि तन्त्रान्तर में उक्त होने से अवयवों का उपदेश नहीं है, तो उसी तरह प्रमाणों का भी उपदेश नहीं होना चाहिए; क्योंकि प्रमाणों का भी विचार न्यायादि शास्त्रों में किया जा चुका है।

वादी—प्रमाणों का भी अनुपदेश प्रसक्त हो जायेगा, यह कथन अयुक्त है; क्योंकि जिनका उपदेश सप्रयोजन है, उनका उपदेश करने में कोई दोष नहीं है। जो प्रयोजनवान् है उसका उपदेश न करना ही आपत्तिजनक है, यह उचित है। उपदेशमात्र को सदोष कहकर कौन खण्डन करेगा? इसलिये आपका कथन अकिञ्चितकर (निरर्थक) है।

और भी, प्रधान का उपदेश होने पर गुणभूत जो भी होते हैं, उनका उस प्रधान में अन्तर्भाव स्वतः हो जाता है। जैसे 'तक्ष्णुहि चैत्र' ऐसा कहने पर जितने साधनों के विना तक्षण क्रिया नहीं हो पाती है, उन सभी साधनों को चैत्र ग्रहण करता

उपादत्ते। तथा प्रत्यक्षादिषु प्रमाणेषूपदिष्टेषु यैरेषामविनाभावः सर्वाणि तान्युपादास्यामहे।

किञ्चान्यत्, अन्यत्रापि तदनुष्ठानात्। न केवलमिह, अन्यत्राप्ययमाचार्यः प्रधानानामेवोपदेशं करोति। तदङ्गभूतास्तु तदुपदेशादेव प्रतीयन्ते तद्यथा कारणमस्त्यव्यक्तम् (का० १६), भेदानां परिमाणादिति (का० १५)। इतरथा हि दृष्टान्ताभावादसाधनमेतत्स्यात्। पश्यति त्वाचार्यो नादृष्टान्तं साधनं साध्यमाप्नोतीति कृत्वा प्रतिपादकाः प्रतिपादनकाले तन्त्रान्तरोपदिष्टानपि मूलशकलादीनाक्षेप्स्यन्ति इति।

किञ्चान्यत्, अनुमाने भूतवदुपदेशात्। अतश्चैतदेवं यदयमाचार्यस्त्रिविधमनुमानमाख्यातमिति (का० ५) ब्रवीति। कथं कृत्वा ज्ञापकम्? आख्यातस्य हि प्रत्याम्नाये भूतवाचिना शब्देनोपदेशो भवति। न चानेन पूर्वं

---

है। वैसे ही प्रत्यक्षादि प्रमाणों का उपदेश करने पर जिनके साथ इन प्रमाणों का अविनाभाव सम्बन्ध होता है, उन सबों को हम गृहीत कर लेंगे।

एवं अन्य जगह भी आचार्य ने ऐसा किया है। अर्थात् केवल यहीं नहीं, अन्यत्र भी ये आचार्य प्रधानों का ही उपदेश करते हैं। उसके जो अङ्गभूत हैं उनकी प्रतीति तो प्रधान के उपदेश से ही हो जाती है। जैसे 'कारणमस्त्यव्यक्तम्' (का० १६),'भेदानां परिमाणात्' (का० १५) इत्यादि में प्रधान का उपदेश किया है, और गौण की प्रतीति उपदेश के विना ही हो जाती है। अन्यथा दृष्टान्त का उपदेश नहीं होने से उक्त प्रतिज्ञा और हेतु अनुमान का साधन नहीं हो सकेगा। आचार्य इस बात को जानते हैं कि विना दृष्टान्त के कोई साधन साध्य की सिद्धि नहीं करता है। इस कारण प्रतिपादनकर्ता व्यक्ति प्रतिपादन के समय दूसरे शास्त्रों में उपदिष्ट भी मूलशकलादि दृष्टान्तों का आक्षेप कर लेंगे।

और भी (अन्य उत्तर भी), जैसे—अनुमान के विषय में भूतकालीन के समान उपदेश किया गया है। अर्थात् ऐसा इसलिये भी है कि यह आचार्य 'त्रिविधमनुमानमाख्यातम्' ऐसा कहते हैं।

प्रश्न—किस प्रकार यह ज्ञापक है?

उत्तर—जो पहले कहा जा चुका है, उसे पुनः कहने में भूतवाचक शब्द के द्वारा उपदेश होता है; किन्तु इस आचार्य ने स्वयं पूर्व में त्रिविध अनुमान का कथन नहीं किया है। यदि कहें कि कथन किया है, तो ऐसा नहीं कह सकते; क्योंकि यह कहा

त्रिविधमनुमानमाख्यातम् । आख्यातमिति चेत्, न तदाख्यातं क्वचिदिति शक्यं प्रतिपादयितुम् । सोऽयमनाख्यायापि यद्भूतवाचिनं शब्दमुपादत्ते, तज्ज्ञापयत्याचार्यस्तन्त्रान्तरक्लृप्तानामपीह सन्निवेशोऽङ्गीक्रियते । किमेतस्य ज्ञापने प्रयोजनम् ? तन्त्रान्तरोपदिष्टोऽपि कर्मयोनीनां प्राणभेदादीनाञ्च लक्षणोपदेशस्संगृहीतो भवतीति सिद्धं तन्त्रान्तरोपदेशादवयवानुपदेशः । तस्मात्सूक्तमेवावयवोपपत्तिरिति ।

अन्यूनता । पदार्थकार्त्स्न्यमशेषताऽन्यूनतेत्यभिधीयते । पदार्थाश्च दश चूलिकार्थाः, पञ्चाशत्प्रत्ययाः । तत्रास्तित्वमेकत्वं पञ्चभिर्वीतैः सिद्धम् । अर्थवत्त्वं कार्यकारणभावः । पारार्थ्यं संहत्यकारित्वात् परार्थत्वात् । अत एवान्यत्वम् । चेतनाशक्तेर्गुणत्रयाज्जन्ममरणकरणानाम् (का० १८) इत्येवमादिभिः पुरुषबहुत्वम् । पुरुषस्य दर्शनार्थम् (का० २१) इति संयोगः ।

---

जा सकता है कि त्रिविध अनुमानों का इस शास्त्र में कहीं भी कथन नहीं हुआ है। इसलिये यह आचार्य पूर्व में नहीं कहने पर भी जो भूतवाचक शब्द का प्रयोग करते हैं, उससे आचार्य यह सूचित करते हैं कि अन्य शास्त्र में उपदेश किये गये का भी यहाँ सन्निवेश मान लिया जाता है।

प्रश्न— ऐसा ज्ञापन करने में आचार्य का क्या प्रयोजन है ?

उत्तर— अन्य तन्त्र में किया गया भी कर्मयोनियों का तथा विभिन्न प्राणिविशेषों का लक्षणोपदेश संगृहीत हो जाता है। इससे सिद्ध होता है कि तन्त्रान्तर में उपदेश होने के कारण इस शास्त्र मे अवयवों का उपदेश आचार्य ने नहीं किया। अतः ठीक ही कहा कि अवयवोपपत्ति भी तन्त्र का गुण है, अर्थात् अङ्ग है।

अन्यूनता—पदार्थों की समग्रता अर्थात् अशेषता अन्यूनता कही गई है। दश चूलिकार्थ और पञ्चाशत् प्रत्यय ये कुल साठ (षष्टि)पदार्थ हैं। इनमें प्रधान का अस्तित्व और एकत्व की सिद्धि पाँच वीत अनुमानों से होती है। कार्यकारणभाव अर्थवत्त्व है। पारार्थ्य भी एक पदार्थ है; क्योंकि कोई भी संघात परार्थ होता है। इसीलिये अन्यत्व भी दश चूलिकार्थों में एक पदार्थ है; क्योंकि पुरुष और प्रकृति में यदि अन्यत्व नहीं होता तो प्रकृति परार्थ नहीं हो सकती है। चेतनाशक्ति का त्रिगुण के साथ सम्बन्ध होने से एवं जन्म,मरण तथा करणों के प्रत्येक चेतनाशक्ति के साथ भिन्न-भिन्न होने से पुरुष का बहुत्व सिद्ध है। पुरुष के दर्शन के लिये हुआ प्रकृति का संयोग भी पदार्थ है। 'प्राप्ते शरीरभेदे' (का० ६८) इस वचन से वियोगपदार्थ का वर्णन हुआ है एवं

प्राप्ते शरीरभेदे (का० ६८) इति वियोगः। सम्यग्ज्ञानाधिगमात् (का० ६७) इति शेषवृत्तिः, तस्माच्च विपर्यासात् (का० १९) इति पुरुषस्याकर्तृत्वमित्येवं दश चूलिकार्थाः। मौलिकार्था इत्यर्थः।

पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात्। अष्टाविंशति भेदाः तुष्टिर्नवधाऽष्टधा सिद्धिः (का० ४७) इति पञ्चाशत्प्रत्ययाः। सैषा षष्टिः पदार्थानाम्। तदुपपत्तिरन्यूनता।

संशयनिर्णयोक्तिः। संशयश्च निर्णयश्च तौ संशयनिर्णयौ,तयोरुक्ति-स्संशयनिर्णयोक्तिः। सामान्याभिधानं संशयः। तद्यथा,महदादि तच्च कार्यं प्रकृतिविरूपं सरूपञ्च (का० ८) इत्युक्ते संशयो भवति केन धर्मेण कार्यं प्रकृतिविरूपं केन वा सरूपमिति। विशेषाभिधानं निर्णयः। स च द्विविधः, शब्दतोऽर्थतश्च। शब्दतस्तावद् यथा हेतुमदादिभिः कार्यं प्रकृतिविरूपम्, त्रैगुण्यादिभिः प्रकृतिसरूपमिति। अर्थतस्तद् यथा, तेभ्यो भूतानि पञ्च पञ्चभ्यः, एते स्मृता विशेषाः (का० ३८), किं कारणम्? यस्मात् शान्ता घोराश्च मूढाश्च (का० ३८) अशान्ताघोरामूढत्वात्तन्मात्राण्यविशेषाः।

---

'सम्यग्ज्ञानाधिगमात्' (का० ६७) इसके द्वारा शेषवृत्ति पदार्थ का निरूपण हुआ है। 'तस्माच्च विपर्यासात्' (का० १९) इस सूत्र से पुरुष का अकर्तृत्व बताया गया है। इस प्रकार दश चूलिकार्थ हैं। 'पञ्च विपर्ययभेदा' इत्यादि कारिका के द्वारा पञ्चाशत् प्रत्यय बताये गये हैं। इस प्रकार सांख्यशास्त्र में सम्पूर्ण पदार्थ वर्णित हैं। इन समग्र पदार्थों की उपपत्ति यहाँ अन्यूनता है।

'संशयश्च निर्णयश्च संशयनिर्णयौ' यहाँ द्वन्द्व समास है। इन दोनों की उक्ति संशयनिर्णयोक्ति है। सामान्यतः कथन संशय है। अर्थात् विशेषरूप से कथन न करना और सामान्यरूप से कथन करना यहाँ संशय का बीज है। जैसे 'महदादि तच्च कार्यं प्रकृतिविरूपं सरूपञ्च' (का० ८) ऐसा सामान्यरूप से कहने पर संशय होता है कि किस धर्म से महदादि कार्य प्रकृति के विरूप हैं और किस धर्म के कारण प्रकृति के सरूप हैं। विशेष स्वरूप का कथन निर्णय है। वह दो प्रकार का होता है, शब्द द्वा।र तथा अर्थ द्वारा। शब्द द्वारा जैसे 'हेतुमदनित्यम्' इत्यादि से महदादि कार्य प्रकृतिविरूप हैं। तथा 'त्रिगुणम् अविवेकिविषयः' इत्यादि से महदादि कार्य प्रकृति का स्वरूप कहा गया है। अर्थतः निर्णय जैसे 'तेभ्यो भूतानि पञ्च पञ्चभ्यः, एते स्मृता

उद्देशनिर्देशम् । उद्देशश्च निर्देशश्च उद्देशनिर्देशम् । सर्वो द्वन्द्वो विभाषयैकवद् भवति इति द्वन्द्वैकवद्भावः सङ्क्षेपवचनमुद्देशः । तद्यथा, एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः (का० ४६) । विस्तरवचनं निर्देशः । तद्यथा, पञ्च विपर्ययभेदा भवन्ति (का० ४७) भेदस्तमसोऽ-ष्टविधः (का० ४८) इत्यादि ।

अनुक्रमश्च । पदार्थानामानुपूर्व्या सन्निवेशोपदेशोऽनुक्रमः । तद्यथा, प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः (का० २२) इत्यनेन ।

संज्ञोपदेशो संज्ञिप्रत्यायनार्थः शब्दः संज्ञा । सा च द्विविधा—अर्थ-निबन्धना स्वरूपनिबन्धना च । तत्रार्थनिबन्धनाऽर्थवशेनार्थक्रियापेक्षा । जात्याद्यर्थस्वरूपान्तर्भावी यथाऽर्थस्तथाभूतमेव संज्ञिनं प्रत्याययति । तद्यथा पाचको लावक इति । स्वरूपनिबन्धना पुनः संज्ञिप्रत्यायनोपायमात्रम् ।

---

विशेषाः' (का० ३८) यहाँ पर पञ्चभूतों को विशेष के रूप में कहा गया है; क्योंकि 'शान्ता घोराश्च मूढाश्च' (का० ३८) इस वचन के द्वारा पञ्चभूत शान्त घोर और मूढ़ बताये गये हैं, इसलिए पञ्चभूत विशेष हैं। इससे अर्थात् सिद्ध हो जाता है कि अशान्त अघोर और अमूढ़ होने से पञ्चतन्मात्राएँ अविशेष हैं।

'उद्देशश्च निर्देशश्च उद्देशनिर्देशम्' यहाँ द्वन्द्व समास है। सभी द्वन्द्वसमास में विकल्प से एकवद्भाव होता है। इसके अनुसार यहाँ भी एकवद्भाव हुआ है। किसी वस्तु का संक्षेप से निर्देश करना उद्देश है। जैसे 'एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टि-सिद्ध्याख्यः' (का० ४६) यह कारिका उद्देशरूप है। एवं किसी विषय का विस्तार-पूर्वक कथन निर्देश है, जैसे 'पञ्च विपर्ययभेदा भवन्ति', 'भेदस्तमसोऽष्टविधः' (का०४८) इत्यादि वचन निर्देश हैं।

पदार्थों का क्रमानुसार सन्निवेशपूर्वक उपदेश करना अनुक्रम है। जैसे 'प्रकृते-र्महांस्ततोऽहङ्कारस्तस्माद् गणश्च षोडशकः' (का० २२) इस कारिका द्वारा प्रकृति आदि पदार्थों का यथाक्रम उपदेश किया गया है। इसलिये यह अनुक्रम है।

संज्ञी की प्रतीति कराने वाला शब्द संज्ञा है। अर्थात् जिससे प्रतीति करायी जाय, वह संज्ञा है, तथा जिसकी प्रतीति करायी जाय, वह संज्ञी है। वह संज्ञा दो प्रकार की होती है—एक अर्थनिबन्धना संज्ञा और दूसरी स्वरूपनिबन्धना संज्ञा। जहाँ

स्वरूपमात्रोपकारिणी विनाऽवयवार्थं समयवशादतथाभूतमपि संज्ञिनं प्रत्याययति। तद्यथा, गजकर्णोऽश्वकर्ण इति। प्रयत्नतो भगवतः परमर्षेरार्षेण ज्ञानेन सर्वतत्त्वानां स्वरूपमुपलभ्य संज्ञां विदधतो नास्ति स्वरूपनिबन्धनः शब्दः। तद्यथा, प्रधीयन्तेऽत्र विकारा इति प्रधानम्, पुरि शेते इति पुरुष इत्यादि। तन्मतानुसारिणामप्याचार्याणां ताभिरेव संव्यवहारान्नास्त्यपूर्वसंज्ञाविधानं प्रत्यादरः।

उपदेशः। इतिकर्तव्यताफलसमाख्यानमुपदेशः। तद्यथा—

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्॥ (का० ६४)

एते सूत्रोपपत्त्यादयस्तन्त्रगुणाः।

---

पर किसी प्रयोजनवश अर्थक्रिया को अपेक्षा होती हो, वहाँ अर्थनिबन्धना संज्ञा होती है।

जाति आदि अर्थस्वरूप के अन्तर्गत आने वाला अर्थ जैसा होता है, ठीक वैसे ही संज्ञी की प्रतीति संज्ञा कराती है। जैसे पाचक, लावक इत्यादि। स्वरूपनिवन्धना संज्ञा वह होती है, जो संज्ञी की प्रतीति का उपायमात्र हो। अर्थात् स्वरूपनिवन्धना संज्ञा स्वरूपमात्र को वताने में उपयोगिनी होकर बिना अवयवार्थ को बताए संकेत के द्वारा अवयवार्थ से रहित भी संज्ञी की प्रतीति कराती है। जैसे गजकर्ण अश्वकर्ण इत्यादि संज्ञा स्वरूपनिवन्धना संज्ञा है। किन्तु प्रयत्नपूर्वक अपने आर्षज्ञान के वल से सभी तत्त्वों का स्वरूप जानकर प्रधान इत्यादि संज्ञाओं का विधान करने वाले भगवान् परमर्षि कपिल द्वारा प्रयुक्त प्रधान पुरुष आदि संज्ञा स्वरूपनिवन्धना नहीं होती है। जैसे जिसमें सभी विकार अवस्थित हों, वह प्रधान है। सूक्ष्मशरीर में जो शयन करे वह पुरुष है, इत्यादि असंकेतित संज्ञाएँ स्वरूपनिवन्धना नहीं हैं। उनके मत का अनुसरण करने वाले अन्य आचार्य भी उन्हीं संज्ञाओं से व्यवहार करते हैं। इसलिए प्रधान पुरुष आदि के लिए किसी अपूर्व संज्ञा का विधान करने में उनका आग्रह नहीं है।

'कर्तव्यस्य प्रकार इतिकर्तव्यता' अर्थात् कार्यविधि एवं कार्यविधि के फल का कथन उपदेश कहा गया है। जैसे—'एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्। अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्' (का० ६४)। इस कारिका द्वारा तत्त्वाभ्यासरूप कार्य का विशुद्ध तत्त्वज्ञानरूपी फल का कथन किया गया है। इस प्रकार सूत्रोपपत्ति आदि तन्त्र के गुण इस शास्त्र में हैं।

इतिकरणं प्रकारार्थम्। एवम्प्रकारा अन्येऽपि द्रष्टव्याः। तद्यथा, उत्सर्गोऽपवादोऽतिदेश इत्यादिः। तत्रोत्सर्गः प्रकृतिविरूपं व्यक्तमिति (का० ८) सरूपं चेत्यपवादः (का० ८)। तथा तद्विपरीत इत्युत्सर्गः (का०११), तथा च पुमान् (का०११) इत्यपवादः। सामान्यमचेतनं प्रसवधर्मि व्यक्तम्, तथा प्रधानम् इत्यतिदेशः (का० ११)। इत्येवमन्या अपि तन्त्रयुक्तयः शक्या इह प्रदर्शयितुम्। अतिप्रसङ्गस्तु प्रकृतं तिरोदधातीति निवर्त्यते। सिद्धं तन्त्रयुक्तीनां सम्बन्धोपपत्तेस्तन्त्रमिदमिति।

किञ्च तन्त्रान्तराऽविरोधात्। यदि खल्वपीदमपि प्रकरणं स्यात् तन्त्रान्तरे पातञ्जलपञ्चाधिकरणवार्षगणप्रभृतीनामन्यतमस्य शेषभूतं स्यात्। तैश्चाप्यविरोधस्तत्र तत्रेति वक्ष्यामः। पूर्वतन्त्रशेषभावादिति चेत्, तुल्यम्। एतान्यपि पूर्वतन्त्रशेषभूतानि, तेषामपि प्रकरणत्वप्रसङ्गः।

---

सूत्रोपपत्ति आदि तन्त्रगुणों के प्रसङ्ग में उक्त श्लोक में प्रयुक्त इतिशब्द प्रकार के अर्थ में है। अर्थात् इसी प्रकार के अन्य भी तन्त्रगुण जानने चाहिए। जैसे, उत्सर्ग, अपवाद, अतिदेश आदि। यहाँ 'प्रकृतिविरूपं व्यक्तम्' यह उत्सर्ग है, तथा 'सरूपं च' यह अपवाद है। तथा 'तद्विपरीतः' यह उत्सर्ग है और 'तथा च पुमान्' यह अपवाद है। 'सामान्यमचेतनं प्रसवधर्मि व्यक्तं तथा प्रधानम्' यह अतिदेश है। इस प्रकार के अन्य भी तन्त्रगुण यहाँ दिखाये जा सकते हैं। अत्यन्त विस्तार तो प्रकृत विषय को ढंक देगा, इसलिये विस्तार से निवृत्त हो रहे हैं।

अतः सिद्ध हो गया कि तन्त्रगुणों का सम्बन्ध होने के कारण यह भी एक तन्त्र (शास्त्र) है।

एवं अन्य तन्त्रों के साथ इसका अविरोध होने से भी यह एक तन्त्र है, प्रकरण नहीं है। यदि यह भी किसी तन्त्रान्तर का एक प्रकरणग्रन्थ होता तो पातञ्जल पञ्चाधिकरण तथा वार्षगण प्रभृति तन्त्रों में किसी एक का अङ्ग होता। उन ग्रन्थों के साथ भी इसका उन स्थलों में अविरोध है, इस बात को आगे कहेंगे। यदि यह कहा जाय कि पूर्वतन्त्र का अङ्ग होने से यह प्रकरण है, तब तो तुल्यन्याय से पातञ्जल पञ्चाधिकरण तथा वार्षगण प्रभृति ग्रन्थ भी प्रकरण हो जायेंगे; क्योंकि वे भी पूर्वतन्त्र के शेषभूत हैं। अतः उनमें भी प्रकरणत्व की प्रसक्ति हो जायेगी। यदि कहा जाय कि सकल पदार्थों का संग्रह होने के कारण वे प्रकरण नहीं हैं; किन्तु पृथक् तन्त्र हैं, तो वैसे

अथ मतम्, सकलपदार्थसंग्रहात्तन्त्रान्तराण्येतानि । एवमिहापि सकलपदार्थसङ्ग्रहात्तन्त्रान्तरत्वमभ्युपगन्तव्यम् । तस्माद्युक्तमेतत्तन्त्रमिदम् । इत्युपोद्घातः[1] ।

आह— किंगुणविशिष्टाय शिष्याय पुनरिदं तन्त्रं व्याख्येयमिति ?

उच्यते— जिज्ञासवे मतिमते मीमांसकार्थिनेऽभ्युपगताय शिष्याय व्याख्येयं शास्त्रम् ।

कस्मात् ? परमर्षिप्रामाण्यात् । यस्माद् भगवान् विश्वाग्रजः परमर्षिर्भगवदासुरेर्जिज्ञासामुपलभ्योत्तरगुणविशेषसम्पदं च व्याख्यातवान् । रज एव दुःखम् । तन्निराकरिष्णोर्विवेकोऽयं सत्त्वात् सत्त्वं चास्मान्नानेत्येवमादिना वचनप्रतिपाद्योऽयमर्थो महद्भिश्चोक्तः । तस्माद्रजोदुःखोपघातोपघातकजिज्ञासोः सत्त्वाद्धर्मादिकुशलमूलविपाकोत्पित्सोर्दुःखत्रयनिवृत्तय इदं

---

ही इनमें भी सकल पदार्थों का संग्रह होने से इसे भी पृथक् तन्त्र मानना चाहिए। इसलिए यह सिद्ध है कि यह एक पृथक् तन्त्र है। यहाँ तक प्रस्तुत भाष्य का उपोद्घात हुआ।

प्रश्न– किन गुणों से विशिष्ट शिष्य के लिये इस शास्त्र की व्याख्या करणीय है।

उत्तर— जिज्ञासु मतिमान् विचारक और प्रार्थी के रूप में प्राप्त शिष्य के लिए यह शास्त्र व्याख्यायोग्य है।

प्रश्न— क्यों ?

उत्तर— परमर्षि के प्रमाण से अर्थात् परमर्षि के दृष्टान्त से उक्त गुणों से युक्त शिष्य के लिए यह शास्त्र व्याख्यायोग्य है; क्योंकि विश्व के सर्वप्रथम आविर्भूत परमर्षि भगवान् कपिलमुनि ने भगवान् आसुरि की जिज्ञासा को जानकर तथा उन्हें उत्तमगुण विशेष से सम्पन्न पाकर सांख्यशास्त्र की व्याख्या की।

रजोगुण ही दुःख है, उस दुःख का निराकरण चाहने वाले के लिए यह प्रकृति-पुरुषविवेक है। और वह विवेक सत्त्व से होता है तथा यह विषय 'सत्त्वं च अस्मान् नाना' इत्यादि वचन के द्वारा महान् आचार्यों ने भी प्रतिपादित किया है। इसलिए रजोगुणरूप दुःख से होने वाले उपघात तथा उसके अपघातक के जिज्ञासु एवं सत्त्व से होने वाले धर्म, ज्ञान, वैराग्य, ऐश्वर्यरूप कुशलमूलक विपाक (परिणाम) की उत्पत्ति के इच्छुक

---

१ 'स्थानं निमित्तं वक्ता च श्रोता श्रोतृप्रयोजनम् ।
सम्बन्धाभिधानं च उपोद्घातः स उच्यते' ॥ इति माठरः ।

शास्त्रं प्रवृत्तम्। तदर्थात्परिणम्यते शिष्यस्येति। कथं नाम शिष्यस्य निःश्रेयसेन योगः स्यादित्येवमर्थमिदं व्याख्यानं क्रियत इति।

आह— यदुक्तं जिज्ञासवे व्याख्यानं कर्तव्यमिति तत्र कुतः पुनरियं जिज्ञासा कस्मिन् वाऽर्थे भवतीति? उच्यते—यत्तावदुक्तं कुतः पुनरियं जिज्ञासा भवतीत्यत्र ब्रूमः —

'दुःखत्रयाभिघाताज्जिज्ञासा'

दुःखं रज इत्यनर्थान्तरम्। दुःखयतीति दुःखं भवतीति। त्रयमिति संख्यापदं सर्वद्रव्यविषयं दुःखशब्देन विशिष्यते। प्राधान्याच्च व्यतिरिक्तबुद्धया गृह्यमाणं सम्बन्धित्वादाधारस्य भेदनिबन्धनायाः षष्ठया निमित्तत्वं प्रतिपद्यते दुःखानां त्रयं दुःखत्रयम्।

अभिहन्यतेऽनेनेत्यभिघातः। कः पुनरयमभिघातो नाम?

---

शिष्य के दुःखत्रय की निवृत्ति के लिये इस शास्त्र की प्रवृत्ति है। उसी प्रयोजन से शिष्य को विवेकज्ञानरूपी परिणाम प्राप्त होता है। किस प्रकार शिष्य को निःश्रेयस के साथ योग हो, इसीलिए यह व्याख्यान किया जा रहा है।

प्रश्न— वह जो कहा गया कि जिज्ञासु के लिए व्याख्यान करना चाहिए, तो यह जिज्ञासा क्यों होती है? अथवा किस विषय में होती है?

उत्तर— जो यह प्रश्न किया कि क्यों यह जिज्ञासा होती है, उस पर हम कहते हैं—

त्रिविध दुःखों से अभिसम्बन्ध होने के कारण जिज्ञासा होती है।

दुःख और रज एक ही वस्तु है; क्योंकि 'दुःखयतीति दुःखम्' इस व्युत्पत्ति के अनुसार दुःख का कारण होने से रजोगुण दुःख है। 'त्रयम्' यह संख्यावाचक पद जगत् के सभी पदार्थ को बताने वाला है और दुःखशब्द से उसके विशेषण का प्रतिपादन किया गया है। अर्थात् सारा पदार्थ दुःखात्मक है, यह सूचित किया गया है। प्रधानता के कारण वह दुःख पृथक् बुद्धि का विषय बनता हुआ भेदार्थक षष्ठी विभक्ति के द्वारा सकल पदार्थों का निमित्त बन जाता है। यहाँ दुःख से सम्बन्धित होने के कारण आधारभूत जगत् के साथ दुःख का भेद है। इसलिये दुःख और पदार्थों में निमित्त-नैमित्तिकभाव है। अतः 'दुःखानां त्रयं दुःखत्रयम्' का अर्थ हुआ— दुःखात्मक रजोगुण से उत्पन्न त्रिगुणात्मक जगत्, जिसके द्वारा पुरुष प्रपीड़ित होता है।

प्रश्न—'दुःखत्रयाभिघातात्'। यहाँ अभिघात क्या वस्तु है?

उच्यते— योऽसावुपर्युक्तदुःखत्रयेणान्तःकरणेन चेतनाशक्तेरभिसम्बन्धः। तस्माद् दुःखत्रयाभिघाताज्जिज्ञासा।

यदुक्तं कस्मिन्नर्थे भवतीति तत्राह—अपहन्तीत्यपघातकः,तस्यापघातकस्तदपघातकः।

आह— तदपघातके इति समासाऽनुपपत्तिः, प्रतिषेधात्। कर्तरि यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते। तस्मात्तस्यापघातक इति वक्तव्यम्।

उच्यते—न, शास्त्रे दर्शनात्। 'तत्प्रयोजको हेतुश्च' (पा० १।४।५५) इति शास्त्रे दृष्टः प्रयोगः। पदकारश्चाह—जातिवाचकत्वात्। तथा कदाचिद् गुणो गुणिविशेषको भवति, कदाचिद् गुणिना गुणो विशिष्यत इति चूर्णिकाकारस्य प्रयोगः। तस्मादनवद्यमेतत्।

अयं तु पिण्डार्थः— त्रिविधेन दुःखेनाभिहतो ब्राह्मणस्तदपघातकं हेतुं

---

उत्तर—जो उपर्युक्त दुःखत्रयाश्रय अन्तःकरण के साथ चेतनाशक्ति का प्रतिकूल अभिसम्बन्ध है, वही दुःखत्रयाभिघात है और उसी के कारण जिज्ञासा होती है।

पूर्व में कहा कि वह जिज्ञासा किस विषय में होती है, उसका उत्तर 'तदपघातके हेतौ' इस कारिका में कहा गया है। अर्थात् जो दुःखाभिसम्बन्ध को विनष्ट करे, वह अपघातक है, अर्थात् अपघातका कर्त्ता अपघातक है। 'तस्य अपघातकः' ऐसा विग्रह करके तदपघातकशब्द बनता है।

शंका— 'तदपघातके' यह समास नहीं बन सकता। क्योंकि ऐसे समासका प्रतिषेध किया गया है। जैसे—कर्त्तामें जो तृच् और अक् प्रत्यय होते हैं, उनके साथ षष्ठी समास नहीं होता[1]। इसलिये कारिकाकार को 'तस्य अपघातकः' ऐसा असमस्त ही कहना चाहिये।

उत्तर— उक्त शंका ठीक नहीं है। क्योंकि शास्त्रमें वैसा समास देखा जाता है। जैसे 'तत्प्रयोजको हेतुश्च' (पा० सू० १।४।५५) इस व्याकरण सूत्रमें वैसा समस्त प्रयोग देखा गया है। पदकार ने भी 'जातिवाचकत्वात्' (म० भा० ४।१।१४) यह समस्त प्रयोग किया है एवं चूर्णिकाकार ने भी वैसे समास का प्रयोग किया है। जैसे 'कदाचिद् गुणो गुणिविशेषको भवति, कदाचिद् गुणिना गुणो विशिष्यत इति' (म० भा० ५।१।५९), अतः 'तदपघातके' यहाँ समास निर्दोष है।

यहाँ संक्षेप में यह अर्थ है— तीन प्रकार के दुःखों के सम्बन्ध से पीड़ित हुआ

---

१. द्रष्टव्यम्, पा० सू० 'तृजकाभ्यां कर्तरि' (२।२।१५)।

जिज्ञासते। को नामाऽसौ हेतुः स्याद्यो दुःखत्रयमपहन्यादिति।

आह—दुःखशब्दवाचनमादावमङ्गलार्थत्वात्। मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, अध्येतारश्च मङ्गलेनाभिहतसंस्काराः शास्त्रार्थानाशु प्रतिपद्यन्ते। दुःखमित्ययञ्चामङ्गलार्थः शब्दः, तस्मान्नारब्धव्यः शास्त्रादाविति।

उच्यते—न, वाक्यस्यार्थे प्रयोगात् पदस्यानर्थक्यादमङ्गलार्थत्वानुपपत्तिः। वाक्यमर्थप्रत्यायनार्थं प्रयुज्यते, विशिष्टार्थाभिधानात्, न पदम्। तथा हि पदार्थव्यतिरेकेण विशिष्ट एव वाक्यार्थः प्रतीयते, केवलं तु पदं सामान्यार्थादप्रच्युतं विशिष्टार्थाभिधानासमर्थम्। अत एव न विवक्षितार्थप्रत्यायनयोग्यतयोपादीयते।

तद्यथा—देवदत्तेत्ययं शब्दः कर्तृवाचकत्वेनोपात्तः। सर्वक्रियाविषयत्वाद् नान्तरेण कर्मक्रियाशब्दौ विशिष्टार्थः प्रतीयते। तथा गामिति

---

ब्राह्मण उनके अपघातक हेतु की जिज्ञासा करता है कि वह कौन-सा हेतु है, जो दुःखत्रय को नष्ट कर दे।

पूर्वपक्ष—यहाँ आदि में दुःखशब्द का उच्चारण नहीं करना चाहिए; क्योंकि दुःखशब्द अमङ्गलवाची है। कारण, जिन शास्त्रों के आदि में मङ्गलार्थक शब्द प्रयुक्त होते हैं, वे शास्त्र प्रख्याति को प्राप्त होते हैं तथा उनके निर्माता पुरुष वीर अर्थात् अजेय (कभी पराजित न होने वाले) होते हैं और पढ़ने वाले जन मङ्गल के द्वारा संस्कार को प्राप्त करते हुए शीघ्र शास्त्रविषयों को समझ जाते हैं किन्तु यहाँ पर; 'दुःख'; शब्द अमङ्गलवाचक है। इसलिये शास्त्र के आदि में दुःखशब्द से आरम्भ नहीं करना चाहिए।

समाधान—उक्त शंका उचित नहीं है; क्योंकि यहाँ पर वाक्यार्थ के लिए दुःखशब्द का प्रयोग हुआ है। केवल दुःखपद के निरर्थक होने से वह अमङ्गलवाचक नहीं हो सकता; क्योंकि अर्थ की प्रतीति कराने के लिए वाक्य का प्रयोग किया जाता है। कारण, वाक्य ही विशिष्ट अर्थ का अभिधान करता है, पद नहीं; क्योंकि पदार्थ से व्यतिरिक्त कोई विशिष्ट अर्थ ही वाक्यद्वारा प्रतीत होता है। केवल पद तो सामान्य अर्थ से नहीं हटता है। अर्थात् सामान्य अर्थ में ही वह सीमित रहता है। अतः विशिष्ट अर्थ को बताने में वह (केवल पद) असमर्थ होता है। इसीलिये विवक्षित अर्थ को बताने के योग्य वह नहीं माना जाता है।

जैसे 'देवदत्त' यह शब्द कर्तृवाचक के रूप में प्रयुक्त होता है; किन्तु उसके सर्व-

सर्वक्रियाकर्त्रभिधाननिमित्तत्वात्। तथा अभ्याजेति क्रिया सर्वकर्मकर्तृ-विषयत्वात्।

यदा तु देवदत्त! गामभ्याज शुक्लामित्युच्यते तदा देवदत्तेन[1] गोशब्देन कर्मान्तरेभ्यो विच्छिद्य स्वात्मन्यवस्थाप्यते। क्रिया च गोशब्दश्च सर्वकर्तृभ्यो विच्छिद्य देवदत्तकर्मतया व्यवस्थाप्यते। कर्तृकर्मणी चाभ्याजिक्रियायाः साधनभावेनैव नियम्येते। शुक्लशब्दो गोशब्दश्च[2] गोशब्दं सर्वगुणविषयमाधेयान्तरेभ्यो व्यवच्छिद्य स्वात्मन आधारत्वे नियम्य, तद्विषयतां प्रतिपादयतोत्यनेन क्रमेण विशिष्टो वाक्यार्थः।

केवलानान्तु पदानां सामान्यार्थाद् अप्रच्युतानां विशेषानभिधाना-दानर्थक्यम्। आहच —

---

क्रियाविषयक होने से कर्म ओर क्रियावाचक शब्दों के विना विशिष्ट अर्थ की प्रतीति नहीं होती हैं। वैसे ही 'गाम्' यह कर्मवाचक शब्द सभी क्रियाओं के कर्ता के बोध का निमित्त होने से किसी विशिष्ट अर्थ की प्रतीति नहीं कराता। एवं 'अभ्याज' यह क्रियावाचक शब्द भी सभी कर्म और कर्त्ता के बोध का निमित होने से विशिष्ट अर्थ की प्रतीति नहीं कराता है।

किन्तु जब 'देवदत्त! गाम् अभ्याज शुक्लाम्' ऐसा पूर्ण वाक्य कहा जाता हैं, तब इस वाक्य में आया गोशब्द देवदत्त को महिष आदि अन्य कर्मों से अलग करके अपने में सम्बद्ध कर देता है एवं यहाँ का क्रियाशब्द और गोशब्द अपने को अन्य सभी कर्त्ताओं से पृथक् करके देवदत्त से सम्बद्ध हो जाता है एवं 'अभ्याजि' क्रिया द्वारा 'देव-दत्त' कर्ता एवं 'गौ' कर्म भी अभ्याजिक्रिया का ही साधनरूप से नियन्त्रित किया जाता है। अर्थात् देवदत्त और गो अभ्याजिक्रिया के ही साधन हैं, यह निर्धारण 'अभ्याज' इस क्रियापद से होता है। एवं शुक्लशब्द भी सर्वगुणविषयक गोशब्द को नील-पीत आदि अन्य गुणों से पृथक् कर शुक्ल गुण का आधार जो गो, उसी में अपने को नियन्त्रित करता है। अर्थात् शुक्ल गो का ही बोध कराता है। इस क्रम से सम्पूर्ण वाक्य द्वारा एक विशिष्ट अर्थ का बोध होता है।

केवल पद तो सामान्य अर्थ से नहीं हटने के कारण विशेष अर्थ का बोध नहीं कराने से अनर्थक हैं। जैसा कि भर्तृहरि ने कहा है—

---

१. 'देवदत्तः' युक्तः इति चक्रवर्तिपाठः।

२. 'शुक्लशब्दश्च' इति चक्रवर्तिसम्मतः पाठ एवं युक्तः।

पृथङ्निविष्टतत्त्वानां पृथगर्थाभिपातिनाम् ।
इन्द्रियाणां यथा कार्यमृते देहान्न लभ्यते ॥
तथैव सर्वशब्दानां पृथगर्थाभिधायिनाम् ।
वाक्येभ्यः प्रविभक्तानामर्थवत्ता न लभ्यते ॥ इति ।

(वाक्यपदीयद्वितीयकाण्डम्, ४२६-४२७)

एवं सति कुतोऽयं निश्चयप्रतिलम्भो यद् दुःखशब्दोऽयममङ्गलार्थो यावता सन्दिह्यत एव, अयं किं स्वार्थप्रतिपत्त्यर्थमुपात्तोऽथ हेयत्वायेति । वाक्यस्य तु मङ्गलार्थत्वम्, दुःखप्रहाणार्थमुपादानात् । यद्धि दुःखप्रहाणार्थं वाक्यमुपादीयते तन्मङ्गलार्थं दृष्टम् । तद्यथा, व्याध्यपगमः स्यादलक्ष्मीर्मा भूदिति । दुःखप्रहाणार्थञ्चेदं वाक्यमुपात्तं तस्मान्मङ्गलार्थमिदम् । अत्र यदुक्तं दुःखशब्दवाचनमादावमङ्गलार्थत्वादित्येतदयुक्तम् ।

आह—त्रयग्रहणानर्थक्यम्, गुणैकत्वात् । दुःखं रज इति प्रतिपन्नो भवान्,तच्चैकं शास्त्रे पठ्यते । तस्मात्त्रयग्रहणमनर्थकमिति । निमित्तभेदाद्

---

पृथक्-पृथक् निविष्ट (स्थित) है स्वरूप जिनका, तथा पृथक्-पृथक् प्रयोजन को सिद्ध करने के लिये उन्मुख इन्द्रियों का देह के बिना जैसे कोई कार्य नहीं देखा जाता है, वैसे ही पृथक्-पृथक् अर्थ को बताने वाले, किन्तु वाक्यों से अलग हुए किसी भी शब्द की सार्थकता नहीं है।

अर्थात् यहाँ का स्वतन्त्र दुःखशब्द निरर्थक होने से अमङ्गलवाचक नहीं है। ऐसी स्थितिमें यह कैसे निश्चय हो सकता है कि यहाँ पर दुःखशब्द अमङ्गलार्थक है, जब कि सन्देह ही है कि यह दुःखशब्द अपने अर्थ को बताने के लिये कहा गया है ? अथवा उसकी हेयता के लिए कहा गया है।

यहाँ वाक्य तो मङ्गलार्थक हैं; क्योंकि दुःख-विनाश के अर्थ में उसका ग्रहण हुआ है; क्योंकि जो वाक्य दुःखविनाश के अर्थ में बोला जाता है, वह मङ्गलार्थक देखा गया है। जैसे व्याधिका नाश हो, अलक्ष्मी मत हो इत्यादि। वैसे ही यहाँ का वाक्य दुःख-प्रहाण अर्थ के लिए कहा गया है। इसलिए यह मङ्गलार्थक है। अतः पूर्व में यह जो कहा कि अमङ्गलार्थक होनेके कारण ग्रन्थ के आदि में दुःखशब्द का प्रयोग नहीं करना चाहिए, यह ठीक नहीं है।

पूर्वपक्ष—'दुःखत्रयाभिघातात्' यहाँ त्रयग्रहण निरर्थक है, क्योंकि दुःख का

भेदोपचार इति चेत्, स्यान्मतम् । यद्यपि एकं दुःखं तथापि निमित्तानाम-ध्यात्माऽधिभूताऽधिदैवलक्षणानां भेदादस्य भेदोपचारः करिष्यत इति । तच्च नैवम्, कस्मात् ? निमित्तानन्त्येन गुणानन्त्यप्रसङ्गात् । आध्यात्मिकं हि द्विविधम्, शारीरं मानसञ्च । शारीरं तावद्वातपित्तश्लेष्मणां वैषम्यनिमित्तम् । मानसं कामक्रोधलोभमोहविषादभयेर्ष्याऽसूयाऽरत्यविशेषदर्शननिमित्तम् । आधिभौतिकञ्च मनुष्यपशुमृगपक्षिसरीसृपस्थावरनिमित्तम् । आधिदैविकं शीतोष्णवातवर्षाऽशन्यवश्यायावेशनिमित्तभेदात् त्रित्वप्रतिज्ञस्य गुणानन्त्यप्रसङ्गः, स च नेष्टस्तस्मान्न निमित्तभेदात्त्रित्वम् ।

उच्यते—यदुक्तं रजस एकत्वात् त्रित्वानुपपत्तिः; तस्य निमित्तभेदात् त्रित्वोपचार इति, सत्यमेतत् । यत्तूक्तं निमित्तानन्त्येन गुणानन्त्यप्रसङ्ग इति तदयुक्तम् । कस्मात् ? भेदेऽपि सति वर्णसंख्यावद् व्यवस्थानोपपत्तेः ।

---

सम्बन्ध एक ही गुण से है। दुःख रज है ऐसा आपने स्वीकार किया है और वह रज शास्त्र में एक हो कहा गया है। अतः कारिका में त्रय ग्रहण व्यर्थ है। यदि कहें कि निमित्त के भेद से दुःख में भेद का उपचार है। अर्थात् यद्यपि दुःख एक ही है, तो भी अध्यात्म, अधिभूत एवं अधिदैवस्वरूप निमित्तों के भेद से दुःख में भेद का उपचार कर लेंगे, तो ऐसा नहीं हो सकता; क्योंकि निमित्त के अनन्त होने से गुण में भी अनन्तत्व का प्रसङ्ग हो जायगा। अर्थात् आध्यात्मिक दुःख दो प्रकार का होता है, शारीरिक और मानसिक। शारीरिक दुःख वह है, जो वात, पित्त और कफ के वैषम्य के कारण होता है। मानसिक दुःख वह है, जो काम, क्रोध, लोभ, मोह, विषाद, भय, ईर्ष्या, असूया, अरति और अविशेषदर्शन के कारण होता है। एवं आधिभौतिक दुःख वह है, जो मनुष्य, पशु, मृग, पक्षी, सरीसृप एवं स्थावर के कारण होता है। तथा शीत, उष्ण, वात, वर्षा, अशनि (वज्र), अवश्याय के आवेश से होने वाले दुःख को आधिदैविक दुःख कहते हैं। अतः यदि निमित्त के भेद से भेद हो, तो गुणों को तीन माननेवाले के लिये अनन्त गुणका प्रसङ्ग हो जायगा। किन्तु निमित्त के भेद से दुःख का अनन्त भेद इष्ट नहीं है। इसलिये निमित्त भेद से दुःख में त्रित्व भी नहीं हो सकता। अतः कारिका में त्रय ग्रहण करना व्यर्थ है।

समाधान—यह जो आशंका की गई कि रजोगुण के एक होने से दुःख में त्रित्व अनुपपन्न है, और निमित्त के भेद से त्रित्व का औपचारिक प्रयोग है, यह कथन सत्य है; किन्तु यह जो कहा कि निमित्त के अनन्त होने से गुणों में अनन्तत्व का प्रसङ्ग

तद्यथा, चत्वारो वर्णा इत्यस्याः संख्यायाः सति पैप्पलादिभेदे तेषां ब्राह्मणत्वादिव्यतिरेकाभावान्न संख्यान्तरहेतुत्वम्, नो खल्वपि वर्णाव्यतिरेकादेकत्वं भवति। एवं त्रीणि दुःखानीत्यस्याः संख्यायाः सति शारीरादिभेदे तेषामाध्यात्मिकादिव्यतिरेकासम्भवान्न सङ्ख्यान्तरहेतुत्वं नो खल्वपि दुःखाव्यतिरेकादेकत्वं भवितुमर्हति। किञ्चान्यत्, निमित्तभेदाद् भेदोपचार इति भवानेव प्रतिपन्नः। न चोपचारः परमार्थ इत्यलमस्थाने यत्नेन।

आह— अभिघाताज्जिज्ञासायामतिप्रसङ्गः, सर्वेषां सम्भवात्। यथासुरेर्दुःखत्रयाभिघाताज्जिज्ञासा भवतीत्येतदिष्टं तेन सर्वेषामभिघातोऽस्तीति सर्वेषां जिज्ञासाप्रसङ्गः। अथ सति दुःखाभिघाते कस्यचिज्जिज्ञासा भवति कस्यचिन्नेति। नन्वेवमिच्छामात्रम्। प्राक्प्रसङ्गाच्च। प्रागस्या-

---

हो जायगा—यह कथन अयुक्त है; क्योंकि भेद होने पर भी वर्णों को संख्या को तरह व्यवस्था हो सकती है। जैसे, (ब्राह्मण, क्षत्रिय आदि) चार वर्ण हैं। इस चार संख्या का पैप्पल आदि भेद होने पर भी वह भेद चार से अधिक संख्या का हेतु नहीं बनता है; क्योंकि उनमें ब्राह्मणत्व आदि धर्म समानरूप से वर्त्तमान हैं। एवं वर्णत्वधर्म के कारण वर्ण एक भी नहीं होता। इसी प्रकार तीन दुःख हैं, इस संख्या से भी अतिरिक्त संख्या का हेतु-शरीर आदि निमित्त का भेद नहीं हो सकता; क्योंकि शारीरिक हो या मानसिक हो या और किसी प्रकार का दुःख हो, उसमें आध्यात्मिक, आधिभौतिक और आधिदैविक ये तीन भेद अवश्य होते हैं। इसलिये दुःख को त्रिविध कहना उपपन्न है। और यह भी नहीं हो सकता कि दुःखत्वधर्म के कारण दुःख एक ही माना जाय। दुःख को तीन मानने का और भी कारण है कि निमित्त के भेद से भेद का व्यवहार होता है, यह आप ही ने माना है। एवं उपचार परमार्थ नहीं होता है, यह भी सत्य है। इसलिये इस विषय में विशेष यत्न समुचित न होगा।

पूर्वपक्ष— यदि अभिघात के कारण जिज्ञासा हो तो अतिव्याप्तिदोष हो जायगा; क्योंकि सब को दुःखत्रय का अभिघात हो सकता है। अर्थात् दुःखत्रय के अभिघात से आसुरि को जिज्ञासा होती है– यह यदि आचार्य का अभिप्राय है, तो संसार में सभी प्राणी को अभिघात है, इसलिये सभी को जिज्ञासा होने लगेगी। यदि कहें कि दुःखाभिघात होने पर भी किसी को जिज्ञासा होती और किसी को नहीं होती है। इसलिये आसुरि को जिज्ञासा हुई और किसी अन्य प्राणी को नहीं हुई; तो यह कथन एक इच्छामात्र है। यदि इच्छामात्र नियामक हो तो आसुरि को पहले भी जिज्ञासा होनी

सुरेर्जिज्ञासाया दुःखत्रयाभिघातो न चास्यात्यन्तिके हेतौ जिज्ञासा बभूव ।

तेन किं प्राप्तम् ? पश्चादस्य यतो बभूव तद्वक्तव्यम् । यथाऽन्यत्र ब्रह्मणोऽभ्यासनिमित्तादधर्मक्षयात् पूर्वधर्मानुग्रहाच्च विविदिषा, तथाऽन्येषां कुशलमूलाभ्यासपरिपाकात् । न चोपदिष्टमतो लघूक्तमेतत् ।

किञ्चान्यत्, तदपघाताच्चाऽनिर्मोक्षोऽकृत्स्नत्वात् । मोक्षो हि कामरूपाऽऽरूप्यधातुत्रयादिष्यते । दैवमानुष्यतिर्यग्योनित्रयाद्वा । एकदेशश्च संसारस्य दुःखत्रयम् । तस्मात्प्रयोजनमप्ययुक्तम् । किञ्च, निमित्तान्तरसद्भावाद् दिव्यकामध्यानसुखानपेक्षस्यापि विविदिषा सम्भवति, न केवलं तपोद्विग्नस्यापि । तस्मान्निमित्तमप्ययुक्तम् ।

किञ्चान्यत्, उभयथा चाऽसम्भवात् । परिकल्प्यमाना खल्वपीयं

---

चाहिए; क्योंकि आसुरि को जिज्ञासा के पहले भी दुःखत्रय का अभिघात था । फिर भी आत्यन्तिक हेतु में जिज्ञासा नहीं हुई ।

प्रश्न— उससे क्या आया ?

उत्तर—जिस हेतु से आसुरि को जिज्ञासा हुई, वह कहना चाहिए । अर्थात् पीछे जिस हेतु से आसुरि को जिज्ञासा हुई उसे बताना चाहिये । जैसे अन्य स्थलों पर ब्रह्मा के अभ्यास के कारण अधर्म का क्षय होने पर और पूर्वधर्म का अनुग्रह प्राप्त होने पर विविदिषा होती है, वैसे ही औरों को भी कुशलमूल के अभ्यास के परिपाक से विविदिषा होती है । किन्तु यहाँ पर पश्चात् हुई आसुरि की जिज्ञासा का निमित्त नहीं बताया गया । अतः यहाँ कथन में न्यूनता है ।

और भी दोष हैं । जैसे दुःख के अपघात से मोक्ष नहीं हो सकता; क्योंकि दुःखत्रय संसार का एकदेश है । अर्थात् कामधातु, रूपधातु और आरूप्यधातु इन तीनों से मोक्ष पाना अभीष्ट है । अथवा देव, मानुष और तिर्यग्योनि इन तीनों से मोक्ष पाना अभीष्ट है । दुःखत्रय तो संसार का एक अंश है । इसलिये जिज्ञासा का प्रयोजन जो मोक्ष है, वह भी अनुपपन्न है । एवं अन्य निमित्त का सद्भाव है । अर्थात् दिव्यकाम तथा ध्यानसुख की अपेक्षा नहीं रहने पर भी जिज्ञासा हो सकती है । ऐसा नहीं है कि जो ताप से उद्विग्न हो उसी को जिज्ञासा होती हो । इसलिये दुःखत्रय का अभिघात जिज्ञासा का निमित्त भी नहीं हो सकता ।

और भी दोष हैं । जैसे, दोनों ही प्रकार से जिज्ञासा असम्भव है । अर्थात् कल्पित की जाती हुई भी यह जिज्ञासा किसे होगी ? पुरुष को होगी या सत्त्वादि गुणों को होगी ?

जिज्ञासा पुरुषस्य वा स्याद् गुणानां वा। किञ्चातः! तन्न तावत्पुरुषस्य सम्भवति। कस्मात्? नैर्गुण्याभ्युपगमात्। इच्छाद्वेषप्रयत्नसुखदुःखधर्माधर्मज्ञानसंस्काराणामात्मगुणत्वं न भवद्भिरभ्युपगम्यते। न गुणानाम्, अचैतन्यात्। न ह्यचेतना घटादयो हिताहितप्राप्तिपरिहारं जिज्ञासमाना दृश्यन्ते। न च चेतना भवतां गुणाः, सामान्यमचेतनं प्रसवधर्मि प्रधानमिति (का० ११) वक्ष्यमाणवचनात्।

किञ्चान्यत्, तत्त्वान्तरानुपपत्तेः। न च गुणपुरुषव्यतिरिक्तं वस्तुतस्तत्त्वान्तरमस्ति यस्य जिज्ञासा परिकल्प्यमाना परिकल्प्येत। तस्मादनुपपन्ना जिज्ञासा।

उच्यते—यदुक्तमभिघाताज्जिज्ञासायामतिप्रसङ्गः, सर्वेषां तत्सम्भवादिति। अत्र ब्रूमः—न, अभिघातत्वेनाऽप्रतिपत्तेः। यद्यप्यविशिष्टोऽभिघातस्तथापि सर्वे नैनमभिघातत्वेन प्रतिपद्यन्ते। तथा हि, सत्त्वाध्यात्मिकादि-

---

प्रश्न— इससे क्या हुआ?

उत्तर—उक्त जिज्ञासा पुरुष को नहीं हो सकती है; क्योंकि पुरुष को निर्गुण माना गया है। आप इच्छा, द्वेष, प्रयत्न, सुख, दुःख, धर्म, अधर्म, ज्ञान और संस्कार को आत्मा का गुण नहीं मानते हैं। गुणों को भी जिज्ञासा नहीं हो सकती; क्योंकि गुण अचेतन हैं। कारण अचेतन घटादि पदार्थ हित की प्राप्ति और अहित की निवृत्ति के उपाय की जिज्ञासा करते हुए नहीं देखे जाते हैं और आपके यहाँ गुण चेतन नहीं हैं; क्योंकि 'सामान्यमचेतनं प्रसवधर्मि प्रधानमिति' (का० ११) ऐसा आगे वचन है।

अन्य भी दोष हैं। जैसे सांख्यमत में प्रकृति और पुरुष से अतिरिक्त कोई दूसरा तत्त्व अनुपपन्न है। अर्थात् गुण और पुरुष से अतिरिक्त वस्तुतः कोई अन्य तत्त्व है नहीं, जिसकी जिज्ञासा की कल्पना की जाय। इसलिये उपर्युक्त अनुपपत्तियों के कारण जिज्ञासा अनुपपन्न है।

यह जो कहा कि दुःखत्रयाभिघात से यदि जिज्ञासा हो तो अतिव्याप्तिदोष हो जायगा; क्योंकि उक्त अभिघात सभी को हो सकता है। तो यहाँ हमारा कहना है कि उक्त अतिप्रसङ्ग दोष नहीं होगा; क्योंकि अभिघात रूप में सबको प्रतिपत्ति (बोध) नहीं होती है। अर्थात् यद्यपि अभिघात सर्वसाधारण है, तो भी इसको सभी लोग अभिघात के रूप में नहीं अनुभव करते हैं; क्योंकि आध्यात्मिक आदि त्रिविध दुःखों

दुःखेष्वर्जनरक्षणक्षयसङ्गहिंसासु च प्रीत्यभिष्वङ्गादेषां न विषयोद्वेगाप-द्वेषौ। न च विषयपरित्यागो भवति। तस्मान्नाऽविशिष्टोऽभिघातः।

विशेषेऽभिघातबुद्धेर्निमित्ताभिधानमिति चेत्? अथापि स्याद्येयम-सति विशेषे सर्वप्राणभृतामासुरेरेव भगवतो दुःखत्रयाभिघातबुद्धिर्भवति, न पुनरन्येषामित्यत्र निमित्तमभिधानीयम्। न ह्यन्तरेण निमित्तमसौ विशेषोऽवस्थापयितुं शक्यत इति।

एतच्चायुक्तम्। कस्मात्? प्रश्नाऽसम्बन्धात्। कुतो जिज्ञासा भवतीत्येवं चोदकेन पूर्वमकारि प्रश्नस्तस्याश्च साक्षात् कारणमभिघातः, कारणान्तराणामनभिधानादित्यस्यैव निर्देशः कृतः। यत्तु खल्विदानीं कारणकारणमपि पृच्छ्यते तदनवस्थाप्रसङ्गभयान्नोच्यते।। अथ निर्बन्धः क्रियते, तेन पूर्वधर्मानुग्रहस्य कुशलमूलाभ्यासपरिपाकस्य कारणकारणत्व-

---

के रहने पर भी तथा अर्जन, रक्षण, क्षय, संग और हिंसा में दुःख के होने पर भी उनमें सुख के आरोप से प्राणियों को विषयों के प्रति उद्वेग और द्वेष नहीं होता है और विषयों का परित्याग भी नहीं होता। अतः यह कहना ठीक नहीं है कि सबको समान रूप से दुःख का अभिघात है।

शङ्का— आसुरि नामक विशेष व्यक्ति में ही अभिघात की बुद्धि होती है, इसमें निमित्त कहना चाहिये। अर्थात् यह शंका हो सकती है कि कोई विशेषता नहीं होने पर भी प्राणियों के बीच केवल भगवान् आसुरि को ही दुःखत्रय के अभिघात की बुद्धि होती है, औरों को नहीं होती, इसमें निमित्त बताना चाहिए। क्योंकि किसी निमित्त के बिना और प्राणियों की अपेक्षा भगवान् आसुरि में विशेषता की स्थापना नहीं की जा सकती है।

समाधान— आसुरि को ही दुःखाभिघात की बुद्धि हुई, औरों को नहीं हुई, इसका क्या निमित्त है? यह प्रश्न करना अयुक्त है; क्योंकि वैसा प्रश्न करना असंबद्ध है। कारण, जिज्ञासा क्यों होती है? ऐसा पहले प्रश्न किया गया था और उसका उत्तर दिया गया कि जिज्ञासा का साक्षात् कारण अभिघात है; क्योंकि अभिघात से अतिरिक्त किसी दूसरे कारण का निर्देश कारिका में नहीं किया गया है और जो इस समय कारण के कारण को भी पूछते हो, वह ठीक नहीं है; क्योंकि अनवस्थादोष हो जायगा। फ़िर भी यदि पूर्वपक्षी द्वारा अभिघात का कारण बताने के लिये हठ है, तो पूर्वजन्मार्जित धर्म का अनुग्रह, जो कुशलमूल के अभ्यास का परिपाक है, उसी को

मस्माभिर्न प्रतिषिध्यत इति तदेव किं न गृह्यते? एतेन प्राक्प्रसङ्गः प्रत्युक्तः।

यत्तूक्तं तदभिघाते चाऽनिर्मोक्षोऽकृत्स्नत्वादित्येतदप्ययुक्तम्। कस्मात्? शास्त्रार्थाऽनवबोधात्। अष्टविकल्पो दैवस्तैर्यग्योनिश्च पञ्चधा भवति, मानुष्यश्चैकविधः (का० ५३) इत्येतावानस्माकं संसारः। न तु तद्व्यतिरिक्ताः कामरूपारूप्यधातवः क्वचिदपि सिद्धाः। चतुर्दशविधे च संसारे या सुखमात्रा सा दुःखभूयस्त्वात्तच्छब्दवाच्या भवतीति। तथा चोक्तम्—

'अत्र जन्मजरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः।
लिङ्गस्याविनिवृत्तेस्तस्माद् दुःखं समासेन ॥ (का० ५५)

दृश्यते च लोके भूयसा ग्रहणम्। तद्यथाऽऽम्रवनमिति। तस्मात् कृत्स्नविकल्पप्रतिषेधोऽयम्।

---

क्यों नहीं वह ग्रहण कर लेता है; क्योंकि मैंने उसमें कारण की कारणता का कहीं भी प्रतिषेध नहीं किया है। इससे आसुरि के अतिरिक्त जनों में पूर्व में दी गई जिज्ञासा की आपत्ति भी खण्डित हो गई।

यह जो कहा कि दुःखत्रय के अभिघात के कारण जिज्ञासा मानने पर मोक्ष नहीं बन सकेगा; क्योंकि दुःखत्रय संसार का एक अंश होने से, उससे मुक्ति होने से, पूर्ण संसार से मुक्ति नहीं हो सकती तो यह कथन भी अयुक्त है; क्योंकि शास्त्र के अर्थ (अभिप्राय) का ज्ञान प्रतिवादी को नहीं है। कारण आठ प्रकार का दैव सर्ग, पाँच प्रकार का तैर्यग्योनि सर्ग और एक प्रकार का मानव सर्ग, इतना ही हमारा संसार है। उससे अतिरिक्त कामधातु, रूपधातु और अरूपधातु तो कहीं भी सिद्ध नहीं हैं। इस चौदह प्रकार के संसार में जो सुख की मात्रा (अंश) है, वह दुःख की अधिकता के कारण दुःखशब्द का वाच्य होती है। जैसा कि सांख्यकारिका में कहा है—

इस संसार में चेतन पुरुष लिङ्गशरीर की निवृत्ति होने तक जन्म, जरा (वार्धक्य) और मरण से होने वाले दुःख को प्राप्त करता रहता है। इसलिये संसार में प्रायः दुःख ही है।

लोक में देखा जाता है कि जिसकी अधिकता होती है, उसी का व्यवहार होता है। जैसे 'आम्रवनम्' इत्यादि में। इसलिये पूर्वोक्त कृत्स्न का विकल्प खण्डित हो गया।

यत्पुनरेतदुक्तं दिव्यकामध्यानसुखाऽनपेक्षस्यापि विविदिषासम्भवा-न्निमित्तमयुक्तमिति, तदप्यनुपपन्नम् । कस्मात् ? उत्तरत्र प्रतिषेधात् । इष्ट-मेवैतत्सङ्गृहीतम् । तथा चोत्तरसूत्रेण प्रतिषेत्स्यत्याचार्यः 'दृष्टवदानु-श्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः' (का० २) । तस्माद्दिव्यसुखानपेक्ष-स्यापि युक्ता विविदिषा । ध्यानसुखमपि क्षयातिशयौ नातिवर्तते । तदप्यत्रैव सङ्गृहीतम् । तस्मात्प्रतिषेध्य एवायं पक्ष इति न किञ्चिदभिधीयते । यदप्युक्तमुभयथाऽसम्भवाज्जिज्ञासाऽनुपपत्तिरिति, अस्तु गुणानां जिज्ञासा । यत्तूक्तमाचैतन्यादसम्भव इति सत्याचैतन्ये बुद्धिरिच्छादिसद्भावमुत्तरत्र प्रतिपादयिष्यामः । तस्मादुपपन्ना जिज्ञासा ।

आह—तच्छब्दानर्थक्यं प्रतिपदमसम्बन्धात् । योऽयमाचार्येण

---

यह जो कहा कि दुःखाभिघात को जिज्ञासा का निमित्त बताना अयुक्त है; क्योंकि दिव्य कामसुख और ध्यानसुख की अपेक्षा नहीं रखने वाले को भी जिज्ञासा हो सकती है। ऐसा नहीं है कि केवल ताप से उद्विग्न व्यक्ति को ही जिज्ञासा होती हो। तो उक्त कथन भी ठीक नहीं है; क्योंकि आगे उसका प्रतिषेध किया गया है। अर्थात् दिव्य कामसुख और ध्यानसुख की अनपेक्षा इष्ट ही है। इसीलिये अग्रिमसूत्र में आचार्य इन सुखों का प्रतिषेध करते हैं–जैसे 'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशय-युक्तः' ॥ (का० २) इस कारिका द्वारा। इसलिये दिव्यसुख की अनपेक्षा रखने वाले व्यक्ति को भी जिज्ञासा का होना उचित ही है। स्वर्गसुख के समान ध्यानसुख भी क्षय और अतिशय से रहित नहीं है। अर्थात् ध्यानसुख भी स्वर्गसुख के समान ही क्षयी है। तथा हीन और उत्कृष्ट भाव से मुक्त नहीं है। इसलिये दिव्यसुख और ध्यानसुख भी दुःख में ही संगृहीत हो गया। अतः यह पक्ष भी खण्डनीय ही है; क्योंकि कोई विशिष्टबात इस पक्ष में भी नहीं कही जा रही है।

और भी जो यह कहा कि पुरुष या गुण इन दोनों को ही जिज्ञासा नहीं बन सकती है, तो इस सम्बन्ध में यह कहना है कि निर्गुण होने से पुरुष को भले ही जिज्ञासा न हो सके, फिर भी गुणों को जिज्ञासा हो सकती है। इस पर यह जो कहा कि अचेतन होने से गुणों में भी जिज्ञासा असम्भव है, यह ठीक नहीं है; क्योंकि अचेतन होने पर भी बुद्धि में इच्छा आदि का सद्भाव आगे बतायेंगे। अतः सूत्र में उक्त जिज्ञासा सर्वथा उपपन्न है।

पूर्वपक्ष—'तदपघातके' यहाँ 'तत्' पद निरर्थक है; क्योंकि किसी पद के साथ उसका सम्बन्ध नहीं है। अर्थात् आचार्य ने (ईश्वरकृष्ण ने) सूत्र में जो यह तत्

तच्छब्दः सूत्रे पठितोऽस्य खलु प्रतिपदमसम्बन्धात् स्वल्पामप्यर्थवत्तां नोपलभामहे। तस्मान्नैनमपुष्कलार्थमध्येष्यामह इति। उच्यते—कथं हि नाम प्रयोक्तृपारतन्त्र्याच्छब्दस्य शब्दान्तरेण सम्बन्धो न स्यादिति ? आह—न ब्रूमोऽविद्यमानसम्बन्धोऽसम्बन्धः, किन्तर्ह्ययुक्तसम्बन्धो यः स खल्वसम्बन्धः। तद्यथा, अनाचारो माणवक इति द्रव्येण क्रियाशक्तित्वान्न शक्यं किञ्चिदनाचारवता क्षणमप्यवस्थातुम्। अयुक्तं त्वाचरन्ननाचार इत्युच्यते। तथा चास्य तच्छब्दस्य प्रतिपदं सम्बन्धो न युक्तस्तस्मादनर्थकस्तच्छब्दः।

आनन्तर्याज्जिज्ञासाशब्दस्येति चेत्, स्यान्मतम्। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा (महाभाष्य १।१।४२) इत्यनया युक्त्या जिज्ञासाशब्दस्य तच्छब्देनाभिसम्बन्धः शक्य इति।

तच्च नैवम्। कस्मात् ? तदपघाते प्रयोजनासद्भावात्। न हि

---

शब्द पढ़ा है, इसका किसी भी पद के साथ सम्बन्ध नहीं हो सकने से इस शब्द की थोड़ी भी सार्थकता हम नहीं पाते हैं। अतः निरर्थक इस शब्द का पाठ नहीं करना चाहिए।

समाधान—शब्दप्रयोग जो होता है, वह प्रयोक्ता के अधीन होता है। इसलिये दूसरे शब्द के साथ सम्बन्ध क्यों नहीं होगा ? क्योंकि प्रयोगकर्त्ता आचार्य ने किसी के साथ सम्बन्ध के अभिप्राय से ही 'तत्' शब्द का प्रयोग किया है।

पूर्वपक्ष—असंबन्ध कहने का मेरा अभिप्राय संबन्ध का अभाव नहीं है; किन्तु अयुक्त संबन्ध को हम यहाँ असंबन्ध पद से कहते हैं। अर्थात् सूत्र में 'तत्' शब्द का किसी भी शब्द के साथ युक्त संबन्ध नहीं है। जैसे 'अनाचारो माणवकः' यहाँ पर अनाचार का अर्थ आचार का अभाव नहीं है; क्योंकि सभी द्रव्य क्रियाशक्ति से युक्त होते हैं। इसलिये बिना क्रिया के एक क्षण भी कोई द्रव्य नहीं रह सकता। अतः 'अनाचारो माणवकः' यहाँ पर अयुक्त आचार को 'अनाचार' शब्द से कहा जाता है। वैसे ही सूत्र में भी 'तत्' शब्द का किसी भी शब्द के साथ युक्त संबन्ध नहीं है। इसलिये यहाँ का 'तत्' शब्द अनर्थक है। यह हमारा अभिप्राय है।

शंका— अत्यन्तसंनिहित होने के कारण तत् शब्द के साथ जिज्ञासा शब्द का संबन्ध होगा। अर्थात् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इस युक्ति से 'जिज्ञासा' शब्द का सम्बन्ध 'तत्' शब्द के साथ हो सकता है।

उत्तर—ऐसा नहीं कह सकते; क्योंकि तत् 'पद' से यदि जिज्ञासा ली जाय तो

जिज्ञासाऽपघाते किञ्चित् प्रयोजनमस्तीति सत्यपि सम्बन्धे न तच्छब्देनार्थः ।

अभिघातस्येति चेत् ? अथापि स्याद्यदि जिज्ञासापघाते न किञ्चि-त्प्रयोजनमस्तीति । अतस्तत्सम्बन्धो नेष्यते । तेन तर्ह्यभिघातशब्देनास्या-भिसम्बन्धः करिष्यते । तथा चाऽपि तच्छब्दोऽर्थवान् भविष्यतीति ।

एतदनुपपन्नम् । कस्मात् ? निमित्ताऽवस्थाने पुनः पुनरुत्पत्तेः । नैमित्तिकोऽयमभिघातस्तस्य निमित्तवत्त्वादात्यन्तिकोऽपघातो न स्यात् । इतरथा ज्वरनिमित्तको दाह इव शीतद्रव्यसंस्पर्शात्शान्तोऽपि निमित्तावस्था-नात्पुनः पुनः प्रवर्तत इत्यफलत्वमस्य व्यायामस्य ।

'त्रय'शब्दस्येति चेत्, न पारतन्त्र्यात् । आश्रयपरतन्त्रा हि संख्या, तस्या नाऽन्तरेणाश्रयोपघातमपघातः शक्यः कर्तुम् । आनर्थक्यञ्च समान-मिति सुतरां तच्छब्देन नार्थः ।

---

जिज्ञासा के अपघात में कोई प्रयोजन नहीं है। इसलिये 'तत्' शब्द से सम्बन्ध हो सकने पर भी वह निरर्थक है ।

यदि कहो— 'तत्' शब्द के साथ अभिघात का सम्बन्ध हो । अर्थात् यदि जिज्ञासा के अपघात में कोई प्रयोजन नहीं है । इसलिए जिज्ञासा का सम्बन्ध तत्शब्द के साथ इष्ट नहीं है, तब 'अभिघात' शब्द के साथ तत्शब्द का संबन्ध करेंगे । इस प्रकार भी 'तत्' शब्द की सार्थकता हो जायगी ।

तो यह समाधान युक्त नहीं है; क्योंकि अभिघात के साथ भी 'तत्' शब्द का संबन्ध अनुपपन्न है। कारण, निमित्त के रहने पर नैमित्तिक (कार्य) की पुनः पुनः उत्पत्ति हो जाती है। यह अभिघात भी नैमित्तिक है, इसलिये निमित्त के उपस्थित हो जाने के कारण उसका आत्यन्तिक अपघात नहीं हो सकता है। ऐसी स्थिति में ज्वर के निमित्त से हुआ दाह जैसे शीतद्रव्य के स्पर्श से कुछ क्षण के लिये प्रशान्त होने पर भी ज्वररूपी निमित्त के रहने के कारण वह दाह पुनः उत्पन्न हो जाता है; वैसे ही अभिघात के नैमित्तिक होने के कारण निमित्तवशात् वह पुनः उत्पन्न हो जायगा। इसलिये अभिघात के साथ भी 'तत्' शब्द का संबन्ध जोड़ने का यह प्रयास निष्फल है ।

यदि कहें कि 'तत्' शब्द के साथ 'त्रय' शब्द का सम्बन्ध है, तो ऐसा नहीं कह सकते; क्योंकि 'त्रय' यह संख्या परतन्त्र है। अर्थात् संख्या आश्रय के अधीन होती है। इसलिये त्रित्व संख्या के आश्रयभूत दुःख के अपघात के बिना त्रित्व संख्या का अपघात नहीं किया जा सकता है एवं दुःख का नाश हुये बिना केवल संख्या का नाश

दुःखशब्दस्येति चेत्स्यान्मतम्— यद्येतेषाम्पदानामभिसम्बन्धे यथोक्त-दोषोपपत्तिः, दुःखशब्दं तर्हि तत्-शब्देनाभिसंमन्त्स्यामः। तस्मिन्नेष निषेधो विशतीति। तच्च नैवम्। कस्मात्? अनेकपदव्यवधानात्। कथम-नन्तरवृत्तिना सर्वनाम्नाऽनेकपदव्यवहितस्य दुःखशब्दस्याभिसम्बन्धः शक्यते प्रतिपादयितुम्? तस्मान्न किञ्चिदेतत्।

किञ्चान्यत्। उपसर्जनत्वात्। अयं खल्वपि दुःखशब्दः समास उपसर्जनीभूतः। न चैकस्मिन्काले शब्दस्य प्रधानत्वमुपसर्जनत्वं च युक्तितः सम्भवति। प्रधानस्य च पदान्तरेणाऽभिसम्बन्धः। तस्माद्विवादास्पदमे-वैतत्सूत्रम्।

किञ्चान्यत्। नित्यानामपघातानुपपत्तेः। इह नित्यानामपघातः कर्तुं न शक्यते। तद्यथा पुरुषाणाम्। अनित्यानाञ्चापघातो दृष्टः। तद्यथा, ज्वरा-

---

निरर्थक भी है। इसलिये 'तत्' शब्द के साथ 'त्रय' शब्द का संबन्ध मानने पर कोई प्रयोजन नहीं सिद्ध होता है।

शंका— 'तत्' शब्द के साथ 'दुःख' शब्द का संबन्ध होगा। अर्थात् यदि पूर्वोक्त पदों का 'तत्' पद के साथ संबन्ध होने में पूर्व में कहे गये दोष हैं, तो 'दुःख' शब्द को 'तत्' शब्द के साथ संबद्ध करेंगे और दुःख में ही अपघात का निवेश हो जायगा। तथा दुःख का नाशरूपी प्रयोजन होने से तत्शब्द की सार्थकता भी सिद्ध हो गई।

उत्तर—ऐसा भी नहीं कह सकते? क्योंकि अनेक पदों का व्यवधान है। सर्वनाम का संबन्ध अव्यवहित पद के साथ होता हैं। इसलिये अनेक पदों से व्यवहित 'दुःख' शब्द का 'तत्' शब्द के साथ संबन्ध का प्रतिपादन कैसे किया जा सकता है? अतः यह भी समाधान अकिञ्चित्कर है।

और भी दोष है कि दुःख शब्द उपसर्सन है। अर्थात् यह 'दुःख' शब्द भी समास में उपसर्जन हो गया है। अर्थात् गौण हो गया है। एक समय में कोई भी शब्द प्रधान और उपसर्जन दोनों नहीं हो सकता; क्योंकि युक्तिविरुद्ध है। और दूसरे पद के साथ प्रधान का ही संबन्ध होता है। इसलिये संबन्ध नहीं हो सकने से यह सूत्र सर्वथा विवादास्पद है।

और भी दोष है कि नित्य वस्तु का अपघात नहीं हो सकता। अर्थात् यहाँ नित्य वस्तु का अपघात (विनाश) नहीं किया जा सकता है, जैसे पुरुषों का अपघात नहीं किया जा सकता; क्योंकि वे नित्य हैं। अनित्य पदार्थों का ही अपघात

दीनाम् । नित्यञ्च दुःखम्, तस्मात्तदपघातेऽभ्युत्थानानर्थक्यम् । वृत्त्यपघाते तदपघात इति चेत्, स्यात्पुनरेषा बुद्धिः । सत्यं नित्यानामपघातो न युक्तितः सम्भवति । न तु वयं गुणलक्षणस्य दुःखस्यापघातं ब्रूमः, किन्तर्हि वृत्तिरस्याभिभूयत इति । तच्च नैवम् । कस्मात् ? उक्तोत्तरत्वात् । उक्तमत्रोत्तरं निमित्तावस्थाने पुनरुत्पत्तेरिति । तस्मादयमप्यमार्गः ।

किञ्चान्यत् । अविशेषात्कल्पयित्वाऽपि वृत्त्यपघातं वृत्तिवृत्तिमतोरनन्यत्वाद् वृत्त्यपघाते वृत्तिमदपघातः प्राप्त इति नास्ति कश्चिद्विशेषः । तस्मात् कृशोऽयं परिहार इति नार्थस्तच्छब्देन ।

उच्यते—यदुक्तं तच्छब्दानर्थक्यं प्रतिपदमसम्बन्धादित्यस्तु दुःखशब्देनाभिसम्बन्धः । तत्सम्बन्धे यथोक्तदोषोपपत्तिरिति चेत्, स्यान्मतम् । यदि

---

देखा गया है, जैसे ज्वर आदि का । और रजोगुणात्मक दुःख तो नित्य वस्तु है । इसलिये उसके अपघात के लिये प्रयास व्यर्थ है ।

शंका—वृत्ति के अपघात होने पर दुःख का अपघात हो सकता है । अर्थात् ऐसा हम समझ सकते हैं कि वस्तुतः नित्य पदार्थ का अपघात युक्ति से सिद्ध नहीं है, यह बात सत्य है । फिर भी हम गुणरूप दुःख का अपघात नहीं कहते हैं । प्रत्युत (बल्कि) दुःख की वृत्ति अभिभूत होती है, यह हमारा कथन है ।

समाधान—वह भी नहीं हो सकता; क्योंकि यहाँ पूर्व में उत्तर दिया जा चुका है कि निमित्त के रहते पुनः पुनः दुःख की उत्पत्ति हो जाती है । इसलिये यह भी मार्ग ठीक नहीं है ।

और भी बाधा है कि वृत्त्यपघात कहने से कोई विशेषता नहीं आती है । अर्थात् यदि वृत्ति के अपघात की कल्पना भी की जाय तो वृत्ति और वृत्तिमान् में कोई अन्तर नहीं होने से वृत्ति का अपघात होने पर वृत्तिमान् का भी अपघात प्राप्त हो जाता है । इसलिये कोई विशेषता नहीं हुई ।

तात्पर्य यह है कि वृत्ति का अपघात भी दुःख का ही अपघात है, क्योंकि वृत्ति और वृत्तिमान् एक होता है । ऐसी स्थिति में नित्य दुःख का अपघात नहीं हो सकता यह जो हमने कहा था, वह ज्यों का त्यों कायम है । अतः वृत्ति को लेकर किया गया यह परिहार भी दुर्बल है । इसलिये 'तत्' शब्द के साथ 'दुःख' शब्द का संबन्ध नहीं हो सकता है ।

यह जो कहा कि तत् शब्द निरर्थक है; क्योंकि किसी भी पद के साथ संबन्ध

तर्हि तच्छब्दस्य दुःखशब्देनैवाऽभिसम्बन्धोऽभ्युपगम्यते, तेन येऽस्माभिः पूर्वमभिहिता दोषास्ते प्रसज्यन्ते। तस्मात् प्रतिषिद्धस्य पक्षस्य परिग्रहे साहसमात्रमिति। एतच्च नैवम्, कस्मात्? प्रतिविधानात्। सत्यमसति प्रतिविधाने साहसमात्रं स्यात्। प्रतिविधीयते तु, तस्माददोषोऽयमिति।

किन्तदिति चेत्, स्यान्मतम्। उच्यतान्तर्हि किन्तत् प्रतिविधानं यस्यावष्टम्भेनानेकदोषव्याहतोऽप्ययं पक्ष आश्रीयते। न ह्यनुक्तमस्माभिराकारमात्रेण शक्यं प्रतिपत्तुमिति। उच्यते—बाढम्। यत्तावदुक्तमनेकपदव्यवधानान्न दुःखशब्दस्य तच्छब्देनाभिसम्बन्ध इत्यत्र ब्रूमः—न, अनभ्युपगमात्। यो ह्यनन्तरकृतं शब्दस्य शब्दान्तरेण सह सम्बन्धमाचष्टे तम्प्रत्युपालम्भः स्यात्। वयन्त्वर्थकृतं सम्बन्धमाचक्ष्महे। तथा चोक्तम्—

---

नहीं हो सकता है, वह ठीक नहीं है; क्योंकि 'तत्' पद का 'दुःख' शब्द के साथ संबन्ध हो सकता है। यदि कहो कि 'दुःख' शब्द के साथ संबन्ध करने में पूर्वोक्त दोष हो जायेंगे। अर्थात् यदि 'तत्' शब्द का 'दुःख' शब्द के साथ संबन्ध स्वीकार किया जाता है तो जिन दोषों को हमने पूर्व में कहा है, वे सभी दोष प्रसक्त हो जाते हैं। इसलिये जो पक्ष पूर्व में निषिद्ध किया जा चुका है, उसका ग्रहण करना साहस मात्र है। तो ऐसा नहीं कह सकते; क्योंकि उस दोष का निराकरण कर दिया जा रहा है। अर्थात् यह बात ठीक है कि दोष का निराकरण किये बिना 'तत्' शब्द का 'दुःख' शब्द के साथ संबन्ध मानना साहसमात्र होगा; किन्तु हम तो उक्त दोष का निराकरण कर दे रहे हैं। इसलिये 'दुःख' शब्द के साथ 'तत्' शब्द का संबन्ध स्वीकार करना सर्वथा दोषरहित है।

प्रश्न— दोषों का वह निराकरण क्या है? अर्थात् वह निराकरण बताइये जिसके अवलम्ब से अनेक दोषों से प्रतिषिद्ध भी यह पक्ष स्वीकृत किया जा रहा है; क्योंकि बिना बताये आकारमात्र से वह निराकरण नहीं जाना जा सकता है।

उत्तर— आपका कहना ठीक है; किन्तु आपने यह जो कहा कि अनेक पदों का व्यवधान हो जाने से 'दुःख' शब्द का 'तत्' शब्द के साथ संबन्ध नहीं हो सकता है। इस पर हमारा कहना है कि आपका यह आक्षेप ठीक नहीं है: क्योंकि हम यह नहीं मानते कि व्यवधान होने पर संबन्ध नहीं होता है। जो व्यवधानरहित शब्द का दूसरे शब्द के साथ संबन्ध कहते हैं, उनके प्रति यह आक्षेप हो सकता है। हम तो अर्थप्रयुक्त संबन्ध कहते हैं, जैसा कि कहा गया है—

'यस्य येनाभिसम्बन्धो दूरस्थस्यापि तस्य सः ।
अर्थतस्त्वसमानानामानन्तर्येऽप्यसम्भवः ॥

किञ्चान्यत्, शास्त्रे दर्शनात्। शास्त्रे च व्यवहितानामपि सर्वनाम्नामभिसम्बन्धो दृश्यते । 'यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ' इत्यत्रार्थकृतश्च सम्बन्धः शब्दानामभ्युपगतः । ङ्याप्प्रातिपदिकात्, बहुषु बहुवचनम्, सुपो धातुप्रातिपदिकयोः, अलुगुत्तरपदे, इत्येवमादीनां सम्बन्धाभ्युपगमः । तथा अनड्वाहमुदहारिणि भगिनि वहसि, या त्वं शिरसि कुम्भमवाचीनमभिधावन्तमद्राक्षीरिति' वार्तिके दृष्टान्तः । न ह्यत्र सत्यानन्तर्ये शिरसाऽनडुहो वहनम्, कुम्भस्य वा सरणमुपपद्यते । यथा चाऽत्र व्यवहितानामभिसम्बन्धस्तथेहाऽपि द्रष्टव्यः ।

---

अर्थात् जिस शब्द के साथ जिस शब्द का आर्थिक संबन्ध है, वह शब्द यदि दूरस्थ भी हो तो शब्दान्तर के साथ उसका संबन्ध हो जाता है; किन्तु आर्थिक दृष्टि से जो समान नहीं है, उन शब्दों का सामीप्य होने पर भी सम्बन्ध असंभव है। अतः 'तत्' शब्द का 'दुःख' शब्द के साथ आर्थिक संगति होने के कारण संबन्ध होने में कोई बाधा नहीं है।

व्यवहित शब्दों का संबन्ध होने में और भी प्रमाण हैं; क्योंकि शास्त्र में ऐसा देखा जाता है। अर्थात् शास्त्र में अनेक पदों से व्यवहित होने पर भी सर्वनामों का संबन्ध दूसरे पद के साथ देखा जाता है, जैसे 'यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ' (महाभाष्य–५।१।११९) यहाँ पर तत्शब्द और गुणशब्द का अर्थप्रयुक्त संबन्ध महाभाष्यकार ने स्वीकार किया है। यद्यपि गुणशब्द और तत्शब्द के मध्य में अनेक शब्दों का व्यवधान है। ऐसे ही 'ङ्याप्प्रातिपदिकात्' (पा० सू० ४।१।१), 'बहुषु बहुवचनम्' (पा० सू० १।४।२१) 'सुपो धातुप्रातिपदिकयोः' (पा० सू० २।४।७१), 'अलुगुत्तरपदे' (पा० सू० ६।३।१) इत्यादिक सूत्रों का संबन्ध अत्यन्त व्यवधान होने पर भी माना गया है। इसी प्रकार (अनड्वाहमुदहारिणि भगिनि वहसि या त्वं शिरसि कुम्भमवाचीनमभिधावन्तमद्राक्षीरिति' (महाभाष्य–१।१।५७) यह वार्तिकवचन भी व्यवहित पदों का सम्बन्ध होने में दृष्टान्त है। उक्त वार्तिक में अत्यन्त सान्निध्य होने पर भी सिर पर बैल का ढोना या घड़े का दौड़ना उपपन्न नहीं है। अतः जिस प्रकार व्यवहित शब्दों का सम्बन्ध उक्त दृष्टान्तों में होता है, वैसे 'तदपघातके' इस कारिका में 'तत्' शब्द का 'दुःख' शब्द के साथ सम्बन्ध भी जानना चाहिये।

यत्पुनरेतदुक्तमुपसर्जनत्वात्पदान्तरेणाऽनभिसम्बन्ध इति, एतदनुपपन्नम्। कस्मात्? समासादपोद्धारे बुद्धया व्यवस्थितस्य स्वातन्त्र्योपपत्तेः। सत्यमुपसर्जनस्य पदान्तरेणाभिसम्बन्धो नोपपद्यते, न तु वयं समासवृत्तेरेव तच्छब्देनाभिसम्बन्ध इति प्रतिपद्यामहे, किन्तर्हि? समासादपोद्धृतस्य बुद्धिव्यवस्थितस्योपजनितस्वातन्त्र्यस्य शब्दान्तरेण संबन्धमिच्छाम इति।

अथैतदनिष्टम्, 'योगप्रमाणे च तदभावे दर्शनं स्यात्' अथ शब्दानुशासनम्', 'केषां शब्दानाम्' इति चैवमादीनाम्प्रयोगाणां विरोधः प्राप्नोति। अनिष्टञ्चैतत्।

यत्पुनरेतदुक्तम्—नित्यानामपघाताऽनुपपत्तेर्वृत्त्यपघाते च तदपघातप्रसङ्गादिति, एतदप्यनुपपन्नम्। कस्मात्? गुणशक्तेः प्रयोजनोपरमे सत्यात्म-

---

यह जो कहा कि उपसर्जन होने के कारण दुःखपद का दूसरे पद के साथ सम्बन्ध नहीं होगा, वह युक्त नहीं है; क्योंकि समास से अलग करने पर बुद्धि में अवस्थित दुःखपद में स्वातन्त्र्य उत्पन्न हो जायगा। अर्थात् यह बात सत्य है कि उपसर्जन पद का दूसरे पद के साथ सम्बन्ध नहीं हो सकता है; किन्तु हम ऐसा नहीं मानते हैं कि समासान्तर्गत दुःखशब्द का सम्बन्ध किया जा रहा है; किन्तु समास से पृथक् कर बुद्धि में अवस्थित हुये और इसीलिये उपसर्जन न होकर स्वतन्त्र दुःखशब्द का सम्बन्ध दूसरे 'तत्' शब्द के साथ हम चाहते हैं। इसमें कोई आपत्ति नहीं है।

तात्पर्य यह है कि दुःखशब्द को समास से पहले पृथक् कर अपनी बुद्धि में व्यवस्थित करते हैं। उसके बाद वह दुःखशब्द उपसर्जन (गौण) न होकर स्वतन्त्र (मुख्य) हो जाता है। इस प्रकार स्वतन्त्र हुये दुःखशब्द का तत्शब्द के साथ सम्बन्ध होने में कोई आपत्ति नहीं है।

यदि इस विधि से समासान्तर्गत शब्द का शब्दान्तर के साथ सम्बन्ध अभीष्ट न हो तो 'योगप्रमाणे च तदभावे दर्शनं स्यात्' (पा० सू० १।२।५५) तथा 'अथ शब्दानुशासनम्', 'केषां शब्दानाम्' (महाभाष्य—१।१।१) इत्यादि प्रयोगों से विरोध होने लगेगा, जो कि अनिष्ट है।

यह जो कहा कि दुःख नित्य है, इसलिये उसका अपघात नहीं बन सकता है। यद्यपि दुःख के नित्य होने पर भी उसकी वृत्ति का अपघात हो सकता है, तथापि वृत्ति और वृत्तिमान् में अभेद होने से वृत्ति के साथ-साथ नित्य दुःख का भी अपघात होने लगेगा। अतः दुःखशब्द के साथ तत् शब्द का सम्बन्ध नहीं हो सकेगा; किन्तु यह

कल्पेन व्यवस्थानाभ्युपगमात्। नैतदभ्युपगम्यते गुणस्योच्छित्तिर्भवति, वृत्तिर्वाऽस्याऽभिभूयते। किन्तर्हि ? पुरुषार्थनिबन्धना चरितार्था शक्तिरस्य पुरुषार्थप्रवृत्तौ प्रयोजनासद्भावादात्मकल्पेन व्यवतिष्ठत इत्येतद्विवक्षितम्। तस्माद्युक्तमेतत्तदपघातके हेतौ जिज्ञासा प्रवर्तत इति।

कारिका--'दृष्टे साऽपार्था चेत्'

स्यादेतत्--प्रत्यक्षो दुःखप्रतीकारहेतुरस्ति। तस्य समतिक्रमे किं प्रयोजनम् ? तद्यथा, शारीरस्य तावदयमपगमहेतुरनेकद्रव्यरसायनोपभोगः। मानसस्यापि मनोज्ञस्त्रीपानविलेपनभोजनवस्त्रालङ्कारादिविषयसम्प्राप्तिः। आधिभौतिकस्य नीतिशास्त्राभ्यासः, शस्त्रास्त्रकुशलता, विषमस्थानानध्यासश्च। आधिदैविकस्यापि यथाकालं विविधनिवसनास्तरणगर्भगृहप्रासादजालान्तरचन्दनव्यजनमणिहारादिसेवाविविधौषधमङ्गलस्तुतिमन्त्रप्रयोगानुष्ठानमिति दृष्टे हेतौ सा जिज्ञासाऽपार्थेति चेत्—

---

कहना भी अनुपपन्न है; क्योंकि गुणशक्ति का प्रयोजन समाप्त हो जाने पर आत्मा के तुल्य गुणशक्ति की व्यवस्था मानी गई है। अर्थात् हम यह नहीं कहते हैं कि दुःखरूप गुण का उच्छेद होता है, अथवा उसकी वृत्ति तिरोहित हो जाती है; किन्तु पुरुषार्थ को प्राप्त करा देने के कारण गुण की शक्ति चरितार्थ हो जाती है और उसका कोई कर्त्तव्य शेष नहीं रह जाता है। वैसी स्थिति में गुणशक्ति का पुरुषार्थसाधन के लिये प्रवृत्ति करने का कोई प्रयोजन नहीं रह जाता है और वह आत्मतुल्य बन जाती है। यह मेरा अभिप्राय है। अतः 'तदपघातके हेतौ जिज्ञासा प्रवर्तते' सूत्रकार का यह कथन सर्वथा युक्त है।

पूर्वपक्ष— ऐसा हो कि दुःखनिवारण का हेतु प्रत्यक्ष ही है। ऐसी स्थिति में प्रत्यक्ष हेतु का उल्लङ्घन करने में क्या प्रयोजन है ? अर्थात् दृष्ट उपाय से ही दुःख की निवृत्ति हो जायगी। अतः तत्त्वजिज्ञासा निष्प्रयोजन है। जैसे शारीरिक दुःख का निवारण करने वाला अनेक प्रकार के द्रव्य और रसायन का सेवन है, मानस दुःख का भी निराकरण करने वाला हेतु मनोज्ञ स्त्री-पान-विलेपन-भोजन-वस्त्र-अलङ्कार आदि विषय की प्राप्ति है। आधिभौतिक दुःख का भी निवारण करने वाला नीतिशास्त्र का अभ्यास, शस्त्रास्त्र में कुशलता, विषम स्थान में निवास न करना आदि है। एवं आधिदैविक दुःख का भी निवारण करने वाला समयानुसार विविध वस्त्र-आस्तरण-गर्भगृह-प्रासाद-जालान्तर-चन्दन-व्यजन-मणिहार आदि का सेवन तथा विविध औषध;

कारिका—'नैकान्तात्यन्ततोऽभावात्'

एतच्च नैवम् । कस्मात् ? एकान्तात्यन्ततोऽभावात् । एकान्तो नाम नियमेन भावः । अत्यन्तं भूतस्याविनाशः । एकान्तश्च अत्यन्तं च ते एकान्तात्यन्ते तयोरभाव एकान्तात्यन्ततोऽभावः, तस्मात् षष्ठी-स्थाने पञ्चमी । षष्ठ्या एव वा तसिः 'षष्ठ्या व्याश्रय' इति योगविभा-गात् । असमासकरणं वृत्तपूरणार्थम् । मानसस्य च दुःखस्य प्रतीकारे दोषान्तरोपसंग्रहार्थम् । तथा हि, स्त्र्यादीनां सत्येतस्मिन् दोषद्वयेऽशक्य-मर्जनं कर्तुमस्वाभाविकत्वात् । सत्यर्जने रक्षणमशक्यं साधारणत्वात् । सति च रक्षणे क्षयः कृतकत्वात् । सङ्गाच्चानुपशमो भूतोपघातमन्तरेण चासंभव इत्येते दोषाः ।

---

मङ्गल, स्तुति तथा प्रयोग का अनुष्ठान है । अतः दुःखनिवारण के लिये दृष्ट हेतु के रहते तत्त्वजिज्ञासा व्यर्थ है ।

पूर्वोक्त शङ्का ठीक नहीं है; क्योंकि दृष्ट उपायों से दुःखत्रय की निवृत्ति ऐका-न्तिकरूप से और आत्यन्तिकरूप से नहीं होती है । एकान्त शब्द का अर्थ है नियमित-रूप से होना तथा अत्यन्त शब्द का अर्थ है, जो हो जाय उसका विनाश न होना । अर्थात् दुःखनिवृत्ति का सदा के लिये कायम रहना । यहाँ पर 'एकान्तश्च अत्यन्तं च ते एकान्तात्यन्ते' ऐसा द्वन्द्व समास है । एवम् इन दोनों का अभाव अर्थात् एकान्तिक और आत्यन्तिक दुःखनिवृत्ति का अभाव एकान्तात्यन्ततो अभाव है । 'एकान्तात्यन्ततः' इस पद में षष्ठी विभक्ति के स्थान में पञ्चमी विभक्ति है और पञ्चमी के अर्थ में 'तसि' प्रत्यय हुआ है । अथवा षष्ठी के ही अर्थ में 'तसि' प्रत्यय हुआ है । 'षष्ठ्या व्याश्रये' (५।४।४८) इस सूत्र में 'षष्ठ्या' ऐसा योगविभाग माना जाता है । यहाँ पर 'एकान्ता-त्यन्ततो अभावात्' पदों का समास इसलिये नहीं किया कि समास करने पर छन्द की पूर्ति नहीं होती । अर्थात् समास करने पर छन्दोभङ्ग हो जाता है । एवम्, इसलिये भी समास नहीं किया कि मानस दुःख के प्रतीकार की स्थिति में भी अन्य दोषों का संग्रह किया जा सके । जैसे स्त्री आदि को कामादि दुःख के प्रतीकार का उपाय मानने में इन दोनों दोषों के साथ-साथ अन्य दोष भी है कि स्त्री आदि की प्राप्ति करना अशक्य है; क्योंकि उसकी प्राप्ति स्वाभाविक या सहज नहीं है । यदि प्राप्ति हो भी जाय तो उसकी रक्षा अशक्य है; क्योंकि वह सर्वसाधारण है । यदि उसकी रक्षा शक्य भी हो तो उसका क्षय होना अनिवार्य है; क्योंकि वह अनित्य वस्तु है । एवम् उसके सङ्ग से भी शान्ति नहीं हो सकती है । साथ ही किसी प्राणी का उपघात किये बिना उसकी

आह—कथमेतदवगम्यते यद् दृष्टस्य हेतोरनैकान्तिकत्वमनात्यन्तिकत्वं चेति ? उच्यते—प्रत्यक्षम् एवैतदुपलभ्यते । यदायुर्वेदविहितस्य क्रियाक्रमस्याभियुक्तमात्मवन्तं भेषजभिषक्परिचारकसम्पन्नं प्रत्यानर्थक्यम् । आह च—

'सर्वेषां व्याधिरूपाणां निदानं त्रिविधं स्मृतम् ।
आहारश्च विहारश्च कर्म पूर्वकृतं तथा ॥
तत्राहारविहारोत्थान् रोगान् द्रव्यमपोहति ।
यस्तु कर्मकृतो व्याधिर्मरणात्स निवर्तते ॥

पुनरप्याह—

'सोपद्रवः सर्वरूपो बलमांसेन्द्रियापहः ।
सारिष्टश्चैव यो व्याधिस्तं भिषक् परिवर्जयेत् ॥

इत्येवमनैकान्तिकत्वम् ।

---

प्राप्ति असंभव है। ये सब दोष हैं, जिनके संग्रह के लिये 'एकान्तात्यन्ततोऽभावात्' इन पदों में षष्ठी समास नहीं किया।

प्रश्न— वह कैसे मालूम होता है कि दुःखनिवृत्ति का दृष्ट हेतु अनैकान्तिक है और अनात्यन्तिक है ?

उत्तर— प्रत्यक्ष से ही यह बात मालूम होती है कि दृष्ट हेतु दुःखनिवृत्ति का ऐकान्तिक और आत्यन्तिक उपाय नहीं है; क्योंकि देखा गया है कि आयुर्वेद में विहित क्रियाकलाप भी अभियुक्त अर्थात् यथानिर्देश करने वाला आत्मवान् अर्थात् प्रमादरहित अथवा सत्यवान् या धैर्यवान् और औषधि, वैद्य तथा परिचारक से सम्पन्न रोगी के प्रति निरर्थक हो जाता है और कहा भी गया है—

सभी व्याधियों का निदान तीन प्रकार का कहा गया है—आहार, विहार तथा पूर्वजन्मकृत कर्म। उनमें आहार और विहार से होने वाले रोगों को औषध दूर कर देता है; किन्तु जो व्याधि पूर्वजन्मकृत है, वह मृत्यु से ही निवृत्त होता है। और भी कहा है—

जो व्याधि उपद्रवयुक्त है, सभी व्याधियों का समूहरूप है एवं बल, मांस

अनात्यन्तिकत्वं तु निवृत्तानामपि व्याधीनाम्पुनरुत्पत्तिदर्शनात्। महता खल्वपि प्रयत्नेन निर्वर्तिता व्याधयः पुनरुत्पद्यन्ते। तथा चोक्तम्—'पुनर्ज्वरे समुत्पन्ने क्रिया पूर्वज्वरानुगा' इति।

तस्माद्यथैवास्यायुर्वेदादेः प्रतीकारहेतुत्वं प्रत्यक्षसिद्धमेवमेकान्ताऽत्यन्तोऽभावोऽपि। तथा मानसस्य च। यथा च शारीरदुःखप्रतीकारहेतवोऽनैकान्तिकास्तथा स्त्र्यादयोऽपि। कस्मात्? तत्सन्निधाने विषयान्तराभिलाषदर्शनात्। यदि हि स्त्र्यादयो विषयाः सर्वदा दुःखप्रतीकारसमर्था भवेयुः, किमिति तेषु सन्निहितेषु विषयिणो विषयान्तरजिघृक्षा स्यात्? एवमनैकान्तिकत्वम्। अनात्यन्तिकत्वमपि—निवृत्तेच्छानामपि भूयः प्रार्थनासम्भवात्। यदि हि विषयोपभोगोऽत्यन्तमेव मानसं दुःखमपहन्यात्, किं प्राप्तं येन भूयस्तं प्रति विषयिणोऽभिलाषः स्यात्? किं कारणम्? यस्मान्न ह्यविद्यमाने तमसि देवदत्तस्य प्रदीपं प्रत्यपेक्षा भवति। दृश्यते च

---

और इन्द्रियों को क्षीण करने वाला है तथा अरिष्ट से युक्त है, उस व्याधि को वैद्य त्याग दे, अर्थात् उसकी चिकित्सा न करे; क्योंकि इस प्रकार की व्याधि अचिकित्स्य (असाध्य) होती है।

दृष्ट उपाय दुःखनिवृत्ति के प्रति अनात्यन्तिक इसलिये है कि औषध उपचार द्वारा निवृत्त हुये दुःखों की भी पुनः उत्पत्ति देखी जाती है; क्योंकि महान् प्रयत्न द्वारा निवृत्त किये गये रोग फिर से उत्पन्न हो जाते हैं। कहा भी गया है—

अर्थात् ज्वर के फिर से उत्पन्न हो जाने पर पूर्वज्वर के अनुसार क्रिया (उपचार) करनी चाहिये। अतः जैसे इस आयुर्वेद आदि में दुःख प्रतीकार का हेतुत्व प्रत्यक्ष द्वारा सिद्ध है, वैसे ही दुःख की ऐकान्तिक और आत्यन्तिक निवृत्ति का न होना भी प्रत्यक्ष सिद्ध है। इसी तरह मानस दुःख की भी ऐकान्तिक और आत्यन्तिक निवृत्ति दृष्ट उपाय से अवश्य नहीं हो सकती है। अर्थात् जैसे शारीरिक दुःख के प्रतीकार के हेतु औषधादि अनैकान्तिक हैं, वैसे ही स्त्री आदि भी मानसिक दुःख की निवृत्ति में अनैकान्तिक हेतु हैं; क्योंकि उसके सन्निधान में भी अन्य विषय की अभिलाषा देखी जाती है; यदि स्त्री आदि विषय सर्वदा के लिये दुःख-प्रतीकार में समर्थ होते तो स्त्री आदि के सन्निहित होने पर भी विषयी व्यक्ति को विषयान्तर पाने की इच्छा क्यों होती है? इस प्रकार लौकिक उपाय शारीरिक या मानसिक दुःख मिटाने में अनैकान्तिक हैं।

निवृत्तेच्छानामपि विषयोपभोगाद्विषयिणां भूयो विषयाभिलाषः। तेन मन्यामहे नायं दृष्टो हेतुर्दुःखमपहन्ति ? किन्तर्हि ? सुतरां वृद्धिं करोति।

आह च—

'न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते'॥

अपर आह—

'संवेद्यत्वाद् गुरुत्वाच्च निन्दितत्वाच्च साधुभिः।
सर्वत्रासन्निधानाच्च न दृष्टो हेतुरिष्यते'॥

संवेद्यत्वात्। भोगसाधनविकलानामर्थिनां मध्ये विषयिणोपयुज्यमानास्तैस्संवेद्यन्ते। तेषामप्रदायोपयुज्यमानं नैर्घृण्यमाविष्कुर्यात्। विष-

---

एवम्, दुःखनिवृत्ति के प्रति दृष्ट (लौकिक) उपाय अनात्यन्तिक भी हैं; क्योंकि एक बार जिनकी इच्छा निवृत्त हो जाती है, उन्हीं को फिर उस विषय के प्रति प्रार्थना (कामना) होती है। कारण, यदि विषय का उपभोग जड़ से मानस दुःख को मिटाता है, तो उससे क्या प्राप्त हुआ ? जबकि पुनः उस विषय के प्रति विषयी को अभिलाषा होती है; क्योंकि अन्धकार के नहीं रहने पर देवदत्त को प्रदीप की अपेक्षा नहीं होती है। देखा जाता है कि विषय के उपभोग से जिनकी इच्छा शान्त हो गई है, ऐसे विषयी लोगों को फिर से विषय की इच्छा होती है। इससे हम मानते हैं कि दृष्ट हेतु दुःख को नहीं मिटा सकता है, बल्कि दुःख को विशेषरूप से बढ़ाता ही है। कहा भी गया है—

काम की शान्ति कामों के उपभोग द्वारा कभी नहीं हो सकती है। बल्कि जैसे घी से अग्नि बढ़ जाती है, वैसे ही और भी कामना बढ़ती ही जाती है।

और भी कहा है—संवेद्य होने से दृष्टहेतु दुःख के आत्यन्तिक विनाश में समर्थ नहीं है। अर्थात् भोगसाधन से रहित प्रार्थी जनों के बीच विषयी जन के द्वारा उपयोग में लाये जाते हुये भोग के साधनों को देखकर वे प्रार्थी जन वेदना का अनुभव करते हैं। इसलिये उनको बिना दिये उपयोग में लाया जाता हुआ पदार्थ भोग करने वाले व्यक्ति की निर्दयता को प्रकट करता है। अथवा यदि विषयी जन प्रार्थी जनों को भोगसाधनों में से दे देता है, तो भोगसाधन के सीमित होने के कारण उसके लिये बाधा हो जायगी। इसलिये दुःख मिटाने में बुद्धिमान् जनों के लिये दृष्ट उपाय अयोग्य है, अर्थात् असमर्थ है।

विषयिणा प्रदीयमानो वाऽर्थिभ्यः परिमितत्वादवच्छिद्येतेत्यनुपायोऽयं दुःखापघाते बुद्धिमताम् । किञ्च गुरुत्वात् । भोगानां विविधनिवसनस्त्री-पानभोजनविलेपनालङ्कारादीनां सामग्र्ये सुखमुत्पद्यते, नाऽन्यतरवैकल्ये । सामग्र्यं चैषामस्वाभाविकत्वादनुपपन्नम् । आह च–

'नाभिजातिं न विज्ञानं न च शौर्यमपेक्षते ।
लक्ष्मीः संस्कारयोगाच्च क्वचिदेवावतिष्ठते ॥'

इत्येवमनेकार्थाश्रयत्वाद् गुर्विषयभोगः । किञ्च निन्दितत्वाच्चसाधुभिः । निन्दितः खल्वपि साधुभिर्विषयोपभोगः । यस्मादाह—

'आयासाश्च विघाताश्च विप्रलम्भभयानि च ।
यच्चान्यदशिवं लोके तत्कामेभ्यः प्रवर्तते ॥'

पुनरप्याह—

'अयं सक्षेत्रियो व्याधिरयमात्यन्तिको ज्वरः ।
इदमास्पदमीतीनामेष योनिः सपाप्मनाम् ॥

---

एवं गुरु होने के कारण (अर्थात्) कठिन होने के कारण भी दृष्ट उपाय दुःख का प्रतीकार नहीं कर सकता है; क्योंकि विविध प्रकार के निवसन (वस्त्र), स्त्री, पान भोजन, विलेपन, अलंकार आदि भोगसाधनों की समग्रता होने पर ही सुख उत्पन्न होता है। इनमें यदि एक की भी कमी हो जाय तो सुख नहीं होता; किन्तु इन भोगसाधनों की समग्रता अस्वाभाविक होने से अनुपपन्न है। कहा भी गया है—

लक्ष्मी उच्चकुल की अपेक्षा नहीं करती, विज्ञान (विद्या) की अपेक्षा नहीं करती है। शूरता की भी अपेक्षा नहीं करती; किन्तु पूर्वजन्म में किये गये कर्मों से उत्पन्न संस्कार के संबन्ध से कहीं पर ही रहती है। इस प्रकार अनेक प्रकार के पदार्थों पर आश्रित होने के कारण विषयजन्य सुख कठिन है। एवं शिष्ट लोगों के द्वारा विषयोपभोग निन्दित भी माना गया है; क्योंकि कहा गया है—

आयास, विघात तथा विप्रलम्भ के भय एवं अन्य भी जो लोक में अकल्याण है, वह कामनाओं से अर्थात् विषयों के भोग से उत्पन्न हो जाता है।

और भी कहा गया है—

यह प्रसिद्ध विषयोपभोग शरीर के लिये व्याधि है, यह आत्यन्तिक ज्वर है, वह ईतियों (उपद्रवों) का आश्रय है, यह पापयुक्त कर्मों की योनि है।

अप्रकृतित्वौदासीन्यविभुत्वादिसतत्त्वविज्ञानान्नैरात्म्यभ्रान्तिविपक्षभूतादपव-र्गप्राप्तिरवश्यं भाविनीति। यदुक्तम् व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षोऽवाप्यत इति तच्छास्त्रमर्थवद् भवतीति।

अथ नास्तीति निश्चीयते, तेन सामान्यतोदृष्टादनुमानात् तद्वदन्येऽपि पदार्थाः न सन्तीति विप्रलम्भभूयिष्ठमार्षं दर्शनमपहायात्मग्रहदृष्टिविगमा-ल्लोकोत्तरमनवलम्बनं शून्यं ध्यानविषयमुपसम्प्राप्तस्त्रैधातुकक्लेशनिरोधल-क्षणमात्यन्तिकं निर्वाणमवाप्स्यसीति।

शक्यश्चायमर्थो निश्चेतुम् प्रमाणत्रयपरिग्रहादिति व्यवस्थिते व्युदस्य संशयं साध्यावधारणं प्रतिज्ञा। [साध्यस्य यदवधारणम्-अस्ति पुरुष इति सा प्रतिज्ञा।]

साधनसमासवचनं हेतुः। साध्यतेऽनेनेति साधनं लिङ्गम्। समासः संक्षेपः। साधनस्य समासवचनं साधनसमासवचनम्। साधनग्रहणं तदा-

---

वाले अप्रकृतित्व औदासिन्य एवं विभुत्व आदि तत्त्व के ज्ञान से अवश्य ही अपवर्ग की प्राप्ति होगी। जैसा कि कहा है—व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षोऽवाप्यत इति। अर्थात् व्यक्त अव्यक्त और आत्मा के ज्ञान से मोक्ष प्राप्त होता है; इस प्रकार का शास्त्र अर्थवान होता है।

यदि ऐसा निश्चय हो कि आत्मा नहीं है तो सामान्यतोदृष्ट अनुमान के बल से आत्मा के समान अन्य पदार्थ भी असत् है—ऐसा निश्चय होने से आत्मदर्शन को छोड़कर आत्मज्ञान की दृष्टि लुप्त हो जाने से लोकमर्यादा से विपरीत निराधार, एवं प्रवञ्चनापूर्ण शून्यतत्त्व को ध्यान का विषय बनाने वाला व्यक्ति त्रैधातुक क्लेशों का निरोधरूप आत्यन्तिक निर्वाण को प्राप्त हो जायेगा—यह असद्बुद्धि हो जाती है।

प्रत्यक्ष अनुमान और आप्तवचनरूप त्रिविध प्रमाणों के द्वारा इस आत्मारूपी विषय का निश्चय किया जाता है। ऐसा व्यवस्थित हो जाने पर संशय का निराकरण कर के साध्य का निश्चय करना प्रतिज्ञा है। अर्थात् पुरुष है—ऐसा साध्य का जो निश्चय होता है, उसे अनुमान का प्रतिज्ञारूप अङ्ग कहते हैं।

साधन का संक्षेप से कथन हेतु है और जिससे साध्य सिद्धि हो वह साधन है अर्थात लिङ्ग है। समास का अर्थ है संक्षेप, संक्षेप से साधन का कथन करना 'साधन-समासवचन' का अर्थ है।

भासप्रतिषेधार्थम् । नहि तानि साधनं संशयविपर्ययहेतुत्वात् । समास-ग्रहणमवयवान्तरावकाशप्रदानार्थम् । लिङ्गनिर्देशमात्रं हेतुः । यस्तु तस्य साध्यसहभावित्वलक्षणः प्रपञ्चः सोऽवयवान्तराणीत्युक्तं भवति ।

उदाहरणन्त्वत्र निदर्शनं दृष्टान्तः । तस्य साधनस्य साध्येन सहभा-वित्वनिदर्शनं यत् असौ दृष्टान्तः । तद्यथा संहत्यकारिणां परार्थत्वं दृष्टं यथा शयनासनरथशरणानाम् । व्यतिरेकस्त्ववीतस्य प्रसक्तिधर्मान्तरनिवृ-त्तिरूपत्वात् तदन्तर्भूत इति न तदर्थं वैधर्म्यदृष्टान्त उच्यते ।

साध्यदृष्टान्तयोरेकक्रियोपसंहारः उपनयः । साध्यस्य चक्षुरादिपारा-र्थ्यलक्षणस्य दृष्टान्तस्य च शयनादेरेकक्रियोपसंहारः । तत्रार्थान्तरभूतत्वात्

---

यहाँ साधन का ग्रहण साधनाभास का प्रतिषेध करने के लिए है; क्योंकि साधनाभास साधन नहीं होता । अर्थात् साधनाभास से साध्य की सिद्धि नहीं होती है; क्योंकि साधनाभास संशय और विपर्यय का हेतु होता है । हेतु के लक्षण में समासशब्द का उल्लेख अन्य अवयवों को अवसर प्रदान के लिये है । अर्थात् साध्यसिद्धि के लिये हेतु से अतिरिक्त भी अंग अपेक्षित है, यह बात समासग्रहण से सूचित होती है । तात्पर्य यह है कि लिङ्ग का केवल निर्देश करना हेतु है तथा अन्य जो अनुमान में साध्य-साहचर्यरूप प्रपञ्च है, वह हेतु के अतिरिक्त अवयव हैं, यह फलितार्थ है ।

यहाँ उदाहरण या निदर्शन को दृष्टान्त कहते हैं । अर्थात् उस साधन का साध्य के साथ जो साहचर्य स्थल है, वह दृष्टान्त है । जैसे, परस्पर में संहत होकर (मिलकर) अर्थक्रिया करने वाली वस्तु परार्थ देखी गयी है, अर्थात् वह वस्तु दूसरे के प्रयोजन के लिये होती है । जैसे, शयन-आसन-रथ या गृह व्यक्तिविशेष के लिये होता है । यह वीतनामक अनुमान का अङ्ग है । अवीतनामक अनुमान का अङ्ग तो व्यतिरेक दृष्टान्त होता है । और वह पक्ष में प्रसक्त होने वाले धर्मान्तर की निवृत्ति-रूप होने से दृष्टान्त के ही अन्तर्गत है । अतः अवीत अनुमान के लिये प्रयुक्त होने वाला भी दृष्टान्त ही है, अतः उसके लिये वैधर्म्य दृष्टान्त नहीं कहा जाता है ।

साध्य और दृष्टान्तका एक क्रिया में उपसंहार या पर्यवसान होना उपनय है । अर्थात् चक्षुरादि इन्द्रियों में जो परार्थत्व है, उस परार्थत्वरूप साध्य का तथा शयना-दिरूप दृष्टान्त का एक क्रिया में जो पर्यवसान है, वह उपनयनामक अङ्ग है । क्योंकि साध्य और दृष्टान्त के परस्पर में भिन्न वस्तु हाने के कारण सर्वात्मना एक क्रिया नहीं बन सकती है । कारण, उसी से उसका निरूपण नहीं होता अर्थात् पक्ष हो दृष्टान्त नहीं हो सकता है । इसलिये समान धर्म के कारण एक क्रिया का व्यवहार

साध्यदृष्टान्तयोरञ्जसा नैकक्रियोपपद्येत, तेनैव तस्यानिदर्शनादित्यतो धर्म-सामान्याद् यथेदं तथेदमित्येकक्रियोपचर्यते। यथा शयनादयः संहतत्वात् परार्था एवं चक्षुरादिभिरपि परार्थैर्भवितव्यम्, योऽसौ परः, स पुरुषः।

तद्वशात् प्रतिज्ञाऽभ्यासो निगमनम्। हेतुदृष्टान्तोपसंहारापेक्षया यः पुनरभ्यासः तन्निगमनम्। तद्यथा—तस्मादस्ति पुरुष इति।

एषामवयवानां परस्परसम्बन्धाद् विशिष्टार्थः समुदायो वाक्यमि-त्युपदिश्यते। वाक्यमप्यनेकं यदा गुणीभूतस्वार्थमर्थान्तरोपकारित्वादि-तरेण संसृज्यते, तदा शास्त्रमप्येकवाक्यमित्यवसीयते।

आह—जिज्ञासाद्यनभिधानम्, तद्व्यतिरेकेणापि स्वयमर्थगतेः। स्वनिश्चयवच्च परप्रतिपादनात्। यथा हि स्वयमुत्पद्यते निश्चेतुः प्रत्यय-

---

होता है—जिस तरह धूमवान् होने से महानस अग्निमान् होता है, वैसे ही धूमवान् होने से पर्वत भी अग्निमान् है। एवं संघातरूप होने से जैसे शयनादि वस्तु परार्थ होती है, ऐसे ही चक्षुरादिके भी संघातरूप होने से परार्थ होना चाहिये। यहाँ जो पर है; जिसके लिये चक्षुरादि इन्द्रियाँ हैं, वह पुरुष है। इस प्रकार साध्य (पक्ष) और दृष्टान्त का उपसंहार एक क्रिया में होता है।

उसके अधीन प्रतिज्ञा को पुनः दुहराना निगमन है। अर्थात् हेतु और दृष्टान्त के पूर्वोक्त उपसंहार के आधार पर जो प्रतिज्ञा का (साध्यावधारण का) पुनः दुहराना, वह निगमन है।जैसे —'तस्मादस्ति पुरुष इति' अर्थात् उक्त हेत्वादि के आधार पर सिद्ध होता है कि पुरुष है।

उक्त पञ्चविध अवयवों के पारस्परिक सम्बन्ध के कारण विशिष्ट अर्थ को प्रति-पादित करने वाला जो समुदाय, वह वाक्य कहा जाता है। इसे ही पञ्चावयव वाक्यात्मक न्यायशब्द से भी व्यवहृत किया जाता है।

वाक्य भी जब अनेक होता हुआ अपने अर्थ को गौण बनाकर दूसरे अर्थ का उपकारी होकर एक वाक्य दूसरे वाक्य से संसृष्ट होता है, तब शास्त्र भी एक वाक्य के रूप में पर्यवसित हो जाता है।

शङ्का—अनुमानाङ्ग के रूप में जिज्ञासा आदिका अभिधान नहीं करना चाहिये। क्योंकि उसके बिना भी अपने आप अर्थ की अवगति एवं अपने निश्चय की तरह दूसरे में भी बोध की उत्पत्ति की जाती है। अर्थात् जैसे निश्चय कर्त्ता को जिज्ञासादि के बिना भी स्वयं ज्ञान उत्पन्न हो जाता है, वैसे ही दूसरे में उत्पन्न किया

स्तथैवान्यः प्रत्याय्य इत्येतन्न्याय्यम्। न च स्वयमेवार्थं प्रतिपद्यमानस्य जिज्ञासादीनां तत्र व्यापारः। तस्मात् परार्थमप्येषामुपादानं न कल्प्यते।

संशयवचनानर्थक्यं च, प्रतीतार्थत्वात्। निश्चितौ हि वादिप्रतिवादिनौ स्वपक्षयोः। तयोरितरेतरसंशयपर्यनुयोगे नास्ति प्रयोजनम्।

किञ्चान्यत्—प्रयोजनशक्यप्राप्त्यवचनं च, साधनाभ्युपगमादेव तत्प्रतीतेः। न हि महतां निष्प्रयोजना प्रवृत्तिरुपपद्यते। न चाशक्येऽर्थे हिमवत्समीकरणादिषु प्रवृत्तिः। तस्मादनर्थकं तदभिधानम्।

तद्भावे भावादिति चेत्, स्यादेतत्—सत्सु जिज्ञासादिषु तत्त्वाधिगमं प्रति प्रवृत्तिर्भवति, असत्सु न भवति। तस्मादेतान्यपि साधनं भविष्यन्तीति। एतच्चानुपपन्नम्। कस्मात्? अतिप्रसङ्गात्। सत्स्वात्मान्तः

---

जा सकता है, यह न्यायसंगत है। क्योंकि स्वयमेव अर्थ की प्रतिपत्ति करने वाले को जिज्ञासादि व्यापार की अपेक्षा नहीं रहती है। इसलिये दूसरे को ज्ञान उत्पन्न करने के लिये भी जिज्ञासादि ग्रहण की कल्पना नहीं की जा सकती है।

एवं, संशय को अनुमानाङ्ग कहना भी निरर्थक है; क्योंकि विषय की प्रतीति दोनों को ही रहती है। अर्थात् वादी और प्रतिवादी अपने-अपने पक्ष के सम्बन्ध में निश्चयवान् होते हैं। अतः दोनों के लिये परस्पर संशय की अनिवार्यता कथन का कोई प्रयोजन नहीं है।

और भी—प्रयोजन और शक्यप्राप्ति को भी अनुमानाङ्ग नहीं कहना चाहिये; क्योंकि साध्य की सिद्धि को अपनाने से ही प्रयोजन और शक्यप्राप्ति की प्रतीति हो जाती है। कारण, बड़ों की प्रवृत्ति निष्प्रयोजन नहीं होती। साथ ही हिमालय को समतल बनाने आदि अशक्य विषय में भी प्रवृत्ति नहीं होती है। अतः प्रयोजन और शक्यप्राप्ति का कथन अनर्थक है।

यदि कहें कि जिज्ञासादि के होने पर ही अनुमान में प्रवृत्ति होती है। अर्थात् जिज्ञासा आदि के होने पर तत्त्वाधिगम के लिये प्रवृत्ति होती है, और उनके अभाव में नहीं होती है, अतः जिज्ञासा आदि भी अनुमान के साधन होंगे—तो यह भी अनुपपन्न है।

प्रश्न—क्यों?

उत्तर—अतिप्रसङ्गदोष होने से, अर्थात् आत्मा अन्तःकरण इन्द्रियाँ-आलोक

करणेन्द्रियालोकविषयेषु प्रवृत्तिदर्शनात् तेषामपि साधनत्वं स्यात्। अनिष्टं चैतत्। तस्माज्जिज्ञासादयोऽनर्थकाः।

प्रतिज्ञादयो दुर्विहिताः। कथम्? [साध्याभिधायिनः प्रतिज्ञाऽभ्युपगमाद् हेतुदृष्टान्तयोरपि तत्प्रसङ्गः] साध्यावधारणस्यावयवान्तरेष्वप्युपपत्तेः। यदि साध्यावधारणं प्रतिज्ञेत्युच्यते, तेन साध्यस्य हेतोर्दृष्टान्तस्य वा यदवधारणं तदपि प्रतिज्ञा (त्वं) प्राप्नोति, निमित्ताविशेषात्। साध्यशब्दो ह्ययं सामान्यवृत्तिः, न यत्नमन्तरेण विशेषेऽवस्थापयितुं शक्यत इति।

किञ्च हेतुलक्षणानुपपत्तिश्च साधनानुपदेशात्। यो हि साधनसमासवचनं हेतुरित्येतल्लक्षणमाचष्टे, तेन प्राक् साधनमभिधेयं स्यात्। ततो वक्तव्यममुष्य समासवचनं हेतुरिति, न चैवमुक्तम्। तस्मादलक्षणमेतद्।

---

और विषय के रहने पर उक्त प्रवृत्ति देखी जाती है, ऐसी स्थिति में ये भी अनुमान के साधन होने लगेंगे। किन्तु यह अनिष्ट है। अतः जिज्ञासा आदि अनर्थक है।

एवं, प्रतिज्ञादि के स्वरूपों का विधान भी दोषयुक्त है।

प्रश्न—क्यों?

उत्तर—साध्य का अभिधान करने वाले को प्रतिज्ञा माना गया है। ऐसी स्थिति में हेतु और दृष्टान्त में भी प्रतिज्ञात्व का प्रसङ्ग हो जायेगा; क्योंकि साध्य का अवधारण अन्य अवयवों में भी बन जाता है। अर्थात् यदि साध्य के अवधारण को प्रतिज्ञा कहा जाता है, तो साध्यभूत हेतु या दृष्टान्त का जो अवधारण, वह भी प्रतिज्ञा के रूप में प्राप्त हो जाता है; क्योंकि प्रतिज्ञा होने का जो निमित्त है, वह हेतु और दृष्टान्त में भी समान है। कारण, यहाँ साध्यशब्द सामान्य अर्थ का का बोधक होने से हेतु और दृष्टान्त भी साध्य है। क्योंकि बिना प्रयत्न के सामान्यवाची साध्यशब्द को वह्न्यादि विशेष अर्थ में नहीं गृहीत किया जा सकता है।

और भी दोष है—हेतु का लक्षण भी नहीं बन सकता है। क्योंकि हेतुलक्षण में आये साधनशब्द का क्या अर्थ है, यह नहीं बताया गया है। अर्थात् 'साधनसमासवचनं हेतुः' ऐसा जो लक्षण कहते हैं उन्हें पहले साधन क्या है? यह कहना चाहिये। उसके बाद कहना चाहिये कि 'उसका समासवचन हेतु है'। किन्तु ऐसा कहा नहीं। अतः हेतु का यह लक्षण नहीं बन सकता है।

किञ्चान्यत्—समास[ा]वचनं च विस्तरनिषेधप्रसङ्गात् । यदि हि समासग्रहणं क्रियते, किं प्राप्तम् ? योऽयम् 'आध्यात्मिकानां भेदानां कार्यकारणात्मकानां चैकजातिसमन्वयो दृष्टः, इत्येवमादिः साधनप्रपञ्चः, सोऽहेतुरित्युक्तं भवति । तस्मात् समासग्रहणमनिष्टम् ।

लिङ्गाभिधानाददोष इति चेत्, स्यान्मतम्—लिङ्गं हि नः साधनम् । तस्यात्र निर्देशः कृतः । यस्मात्त्वमतिजाड्यादिदमनिष्टमध्यारोप्यते, न त्वस्मत्प्रसा[मा]दादिति ।

एतदप्ययुक्तम् । कस्मात् ? तस्य द्विधा भिन्नस्य पञ्चधा साधनभावात् । तद्धि लिङ्गं वीतावीतत्वेनेष्टम् । तेन द्विधा भिन्नम् । तत्रापि वीतः पञ्चप्रभेदः इत्यतः समुदायान्निष्कृष्टस्यैकस्य लिङ्गत्वमशक्यं वक्तुमिति ।

किञ्चान्यत्, दृष्टान्तलक्षणायोगश्च शब्दार्थलक्षणेऽनिष्टप्रसङ्गात् ।

---

और भी—हेतु के लक्षण में समास भी नहीं कहना चाहिये; क्योंकि विस्तार का निषेध होने लगेगा।

प्रश्न—यदि समासग्रहण किया जाता है तो उससे क्या प्राप्त होता है ?

उत्तर—समासग्रहण करने पर 'आध्यात्मिकानां भेदानां कार्यकारणात्मकानां चैकजातिसमन्वयो दृष्टः' इत्यादि जो साधनप्रपञ्च है, वह अहेतु है ऐसा अर्थ हो जायेगा। अतः समासग्रहण करना अनिष्ट है।

यदि कहें कि यहाँ साधनशब्द से लिङ्ग का अभिधान किया गया है, अतः उक्त दोष नहीं है। अर्थात् हेतु के लक्षण में कहा गया हमारा साधन लिंग है, और उसी का यहाँ निर्देश किया गया है। इसलिये अपनी बुद्धि की जड़ता के कारण उक्त अनिष्ट का आरोप किया गया है, न कि हमारे प्रमाद के कारण।

तो यह कथन भी अयुक्त है। क्योंकि दो भेदों वाले उस लिङ्ग में पाँच प्रकार से साधनभाव हैं। वह लिङ्ग वीत-अवीतरूप से अभीष्ट है। इस प्रकार लिङ्ग के दो भेद हैं। इनमें भी वीत के पाँच भेद हैं। इसलिये समुदाय से निकाल कर किसी एक को लिङ्ग कहना अशक्य है। अतः समास का कथन नहीं करना चाहिये।

और भी—दृष्टान्त का लक्षण भी अयुक्त है; क्योंकि शब्द और अर्थरूप दृष्टान्त में अनिष्टका प्रसङ्ग हो जायगा। निदर्शन ही तो दृष्टान्त है। वहाँ क्या शब्द दृष्टान्त

तन्निदर्शनं दृष्टान्त इति। अत्र शब्दो वा, येन साध्यसाधने निर्देश्येते, स दृष्टान्तःस्यात् ? अर्थो वा, यत्र निदर्श्यते ?

किञ्चातः ? तद्यदि तावच्छब्दः परिगृह्यते, तत उपनयलक्षणं बाध्यते। कस्मात् ? नहि यथाऽभिधानं तथा साध्यमित्येकक्रिया युज्यत इति। अथार्थः परिगृह्यते, तेनाभिधेयस्य वाक्यानवयवत्वात्पञ्चावयवत्व-विरोधः।

किञ्चान्यत्—दृष्टान्तोपनयनिगमनाभेदश्च, हेतुप्रतिज्ञार्थाभिधानात्। साधनत्वमेव साध्याविनाभावित्वलक्षणं दृष्टान्तोपनययोः प्रत्याय्यते। प्रति-ज्ञार्थं च (र्थत्वञ्च) निगमनस्य नावयवान्तरत्वं युज्यते।

उच्यते—यदुच्यते स्वनिश्चयेनाङ्गभावगमनात् परप्रत्यायनार्थं जिज्ञा-साद्यनभिधानमिति। अत्र ब्रूमः—न, उक्तत्वात्। उक्तमेतत् पुरस्ताद्

---

है जिसके द्वारा साध्य और साधन निदर्शित किया जाता है ? अथवा अर्थ है जहाँ पर साध्य-साधन निदर्शित किया जाता है ?

प्रश्न— इससे क्या हुआ ?

उत्तर— यहाँ यदि शब्द को निदर्शन के रूप में परिगृहीत किया जाता है, तो उपनय का लक्षण बाधित हो जाता है। क्योंकि 'जैसा शब्द है, वैसा साध्य है' इस तरह की एक क्रिया युक्त नहीं है। यदि अर्थ को निदर्शन के रूप में परिगृहीत किया जाता है—तो अभिधेयार्थ के वाक्य का अवयव नहीं होने से दृष्टान्तरूप अवयव न्यून हो जायगा और पञ्चावयवत्व का विरोध हो जायगा।

और भी दोष है—दृष्टान्त-उपनय और निगमन का अभेद भी हो जायगा। क्योंकि हेतु और प्रतिज्ञा के अर्थ का इनमें अभिधान होता है। कारण, साध्याविनाभा-वित्वलक्षण साधनत्व ही दृष्टान्त और उपनय में प्रतीत होता है। प्रतिज्ञा का ही अर्थ निगमन में होने से निगमन भी प्रतिज्ञा से भिन्न अवयव नहीं हो सकता है।

समाधान— यह जो कहा कि अपने निश्चय के रहते ही प्रतिज्ञादि में अनुमान का अङ्गत्व प्राप्त है, अतः दूसरे को प्रतीति कराने के लिये जिज्ञासा आदि का कथन नहीं करना चाहिये। यहाँ हमारा कहना है कि उक्त शङ्का ठीक नहीं है, क्योंकि इसके सम्बन्ध में कहा जा चुका है। अर्थात् जिज्ञासा आदि व्याख्या के अङ्ग हैं, यह पूर्व में

व्याख्याक्तं जिज्ञासादयः, सर्वस्य चानुग्रहः कर्त्तव्यः इत्येवमर्थं शास्त्रव्याख्यानं विपश्चिद्भिः प्रतायते, न स्वार्थं स्वसदृशबुद्ध्यर्थं वा। तत्रैवं कल्प्यमाने ये व्युत्पाद्यास्तान् प्रति नैवैषामानर्थक्यम्।

अथैतदनिष्टम्—यदुक्तं सन्दिग्धविपर्यस्ताव्युत्पन्नबुद्ध्यनुग्रहार्थो हि सतां विनिश्चयः शास्त्रकथेत्यस्य व्याघातः। किञ्च नियमानभ्युपगमात्। न हि वयमेषामावश्यकमभिधानमाचक्ष्महे, किन्तर्हि ? यदा प्रतिवादी पर्यनुयुङ्क्ते--किं जिज्ञाससे इति अवश्यमभिधानीयं (शब्दमिति।) केन धर्मेण ? किं नित्योऽनित्य इति ? कुतः संशयः ? (अ)मूर्तत्वात्।

यस्तु न पर्यनुयुङ्क्ते; न तं प्रति एते वाच्याः। क्वचिदानर्थक्यात्

---

कहा जा चुका है। व्याख्या द्वारा सबको अनुगृहीत करना चाहिये, इसी प्रयोजन से विपश्चिद् जन व्याख्यान द्वारा शास्त्र का विस्तार करते हैं, अपने लिये नहीं और अपने सदृश जनों में बुद्धि उत्पन्न करने के लिये भी नहीं। ऐसी कल्पना की स्थिति में जो अज्ञानी हैं और उन्हें ज्ञान देना है, उनके प्रति यह जिज्ञासा आदि अनर्थक नहीं हैं। अर्थात् अबोधजनों के लिये जिज्ञासा आदि की सार्थकता है।

यदि व्युत्पाद्यों के प्रति जिज्ञासादि की सार्थकता इष्ट न हो तो यह जो कहा गया कि 'सन्दिग्ध-विपर्यस्त-अव्युत्पन्न जनों के बोधरूप अनुग्रह के लिये सज्जनों का विनिश्चयरूप शास्त्रविस्तार है' उसका व्याघात हो जायगा। इसके अतिरिक्त जिज्ञासादि का नियम हम नहीं मानते हैं। अर्थात् इनका अभिधान (कथन) आवश्यक है, ऐसा हम नहीं कहते हैं। किन्तु जब प्रतिवादी इसके लिये नियोजित-प्रेरित-बाध्य करता है, या पूछता है कि 'क्या जिज्ञासा करते हो ?' तब अवश्य ही कहना चाहिये कि 'शब्द की जिज्ञासा करता हूँ'।

प्रश्न— किस धर्म से ?

उत्तर— नित्य है या अनित्य है ? अर्थात् शब्द में नित्यत्व है ? या अनित्यत्व है ?

प्रश्न— यह संशय कैसे हो रहा है ?

उत्तर— इसलिये कि शब्द अमूर्त है। क्योंकि अमूर्त पदार्थ नित्य भी होता है और अनित्य भी होता है।

जो तो नहीं पूछता है, उसके प्रति ये सब नहीं कहे जाते हैं। यदि कहो कि एक जगह जिज्ञासादि के अनर्थक होने पर सर्वत्र ही आनर्थक्य की प्रसक्ति हो जायेगी,

सर्वत्र प्रसङ्ग इति चेन्न, इतरेषामपि तत्प्रसङ्गात् । प्रतिज्ञादीनामपि तर्हि क्वचिचिदनभिधानमतस्तेषामपि सर्वत्रावचनं प्रसज्यते । तथा च भवतरोक्तं कस्यचित्तु किञ्चित् प्रसिद्धमेव भवतीत्यन्यतरोक्तिरपि साधनं भवति शब्द इवार्थद्वयप्रतीतत्वादुभयानभिधानमिति ।

यदप्युक्तम्—निश्चितत्वात् संशयावचनमिति, असदेतत् । कस्मात् ? उक्तत्वात् । उक्तमेतत् सति पर्यनुयोगे तद्वचनमिति । एतेन प्रयोजनशक्यप्राप्ती प्रत्युक्ते । यो हि पर्यनुयुञ्जीत किंप्रयोजनोऽयं शक्यो वायमर्थ इति, तं प्रति वाच्यमेतत् । यदप्युक्तं तद्भावे भावादिति, न, अनभ्युपगमात् । न ब्रूमो यस्मात् सत्सु जिज्ञासादिषु तत्त्वाधिगमसद्भावस्तस्मादेतेषामवयवत्वमिति । किन्तर्हि ? यं प्रत्येषां प्रतिपत्तावङ्गभावगमनं तं प्रत्येतानि साधनमिति ।

यदप्युक्तं साध्याभिधायिनः प्रतिज्ञाभ्युपगमाद्धेतुदृष्टान्तयोरपि तत्प्रसंग इति, अयुक्तमेतत् । कस्मात् ? जिज्ञासादेः सद्भावे सति

---

तो ऐसा नहीं कह सकते; क्योंकि अन्य अङ्गों में भी आनर्थक्य का प्रसङ्ग होने लगेगा। अर्थात् प्रतिज्ञादि में भी तब सर्वत्र अवचन की प्रसक्ति होने लगेगी। क्योंकि प्रतिज्ञादि का भी कहीं अनभिधान देखा जाता है। आपने कहा है कि किसी अनुमान का तो कोई अङ्ग प्रसिद्ध ही रहता है। इसलिये प्रसिद्ध अङ्ग को छोड़कर अप्रसिद्ध किसी अनन्तर अङ्ग का अभिधान भी अनुमान में साधन होता है।' जैसे शब्दस्थल में दो अर्थों के प्रतीत रहने पर अन्यतर अर्थ स्वतः प्रतीत हो जाता है, इसलिये वहाँ उभय शब्दों का अभिधान नहीं किया जाता है। 'द्वारं पिधेहि' यहाँ केवल 'द्वारम्' कहने पर भी 'पिधेहि' शब्द के अभिधान के बिना भी उस अर्थ का बोध प्रसिद्धिवश से हो जाता है।

यह भी जो कहा कि 'वादी प्रतिवादी दोनों को स्व-स्व साध्य का निश्चय रहने से संशय का अनुमानाङ्ग के रूप में कथन नहीं करना चाहिये, तो यह असत् है; क्योंकि इसके सम्बन्ध में कहा जा चुका है। अर्थात् पूर्व में बताया जा चुका है कि पर्यनुयोग होने पर संशय का कथन आवश्यक है।

इसके अनुसार प्रयोजन और शक्यप्राप्तिसम्बन्धो आक्षेप भी खण्डित हो गया। क्योंकि कोई पूछे कि इस अर्थ का क्या प्रयोजन है ? या क्या यह अर्थ शक्य है ? उसके प्रति प्रयोजन और शक्यप्राप्ति वाच्य है।

यह भी जो कहा कि जिज्ञासादि के रहने पर अनुमान होता है, वह ठीक नहीं है;

तत्प्रतीतेः । यद्यपि साध्यशब्दोऽयमविशेषेण सिद्धत्वादर्थान्तरमाचष्टे, तथापि यं प्रति जिज्ञासासंशयप्रयोजनशक्यप्राप्तयस्तस्य व्युदस्य संशयं साध्यस्यावधारणं प्रतिज्ञा, न हेतुदृष्टान्तयोस्तदस्तीत्यसदेतत् ।

किञ्चान्यत्—तद्भावेऽविरोधात् । यदा तु जिज्ञासादयो हेतौ दृष्टान्ते वा भवन्ति तदा किं कृतकः शब्दोऽथ न कृतकोऽथ बुद्धिर्नित्या क्षणिका वेति भवत्येव तदवधारणं प्रतिज्ञा ।

यदप्युक्तम्—साधनानुपदेशाद्धेतुलक्षणायोग इति, असदेतत् । कस्मात् ? लोकप्रसिद्धत्वात् । यथा साध्यवत्त्वेनेप्सितः पक्ष इति प्रतिज्ञालक्षणमाचक्षाणो भवान्न साध्यलक्षणमाचष्टे, कस्मात् ? साधनीयं साध्य-

---

क्योंकि ऐसा हम नहीं मानते हैं। अर्थात् हम यह नहीं कहते हैं कि जिज्ञासादि के रहने पर ही तत्त्वाधिगम का सद्भाव होता है, अतः जिज्ञासादि अनुमान के अवयव हैं। किन्तु हम यह कहते हैं कि जिसके प्रति ये बोध कराने में अङ्ग बनते हैं, उसके प्रति ये साधन हैं।

यह भी जो कहा कि 'जिसमें साध्य का अभिधान होता है वह प्रतिज्ञा मानी जाती है, इसलिये हेतु और दृष्टान्त में साध्य का अभिधान होने से वे भी प्रतिज्ञा होने लगेंगे। यह कथन ठीक नहीं है। क्योंकि जिज्ञासादि अङ्गों के सद्भाव के अनन्तर साध्य की प्रतीति को प्रतिज्ञा कहा जाता है। अतः हेतु और दृष्टान्त में प्रतिज्ञात्व की प्रसक्ति नहीं होगी। अर्थात् यद्यपि सामान्यवाची साध्यशब्द प्रतिज्ञातिरिक्त अन्य अर्थ हेत्वादि को भी कहता है, तथापि जिसके प्रति जिज्ञासा संशय प्रयोजन शक्यप्राप्तिरूप अवयव हैं, उसके संशय को हटाकर साध्य का अवधारण प्रतिज्ञा है। ऐसी बात हेतु और दृष्टान्त में नहीं है। अतः उक्त आक्षेप असत् है। तात्पर्य यह है कि धूम-महानसादि भी सिद्धिविषय होने से साध्य हैं तथापि इनकी साध्यता जिज्ञासादिपूर्वक नहीं है। अतः हेतु आदि का अवधारण प्रतिज्ञा नहीं हो सकता है।

और भी—जिज्ञासादि के होने पर कोई विरोध नहीं है, अर्थात् जब हेतु या दृष्टान्त में जिज्ञासा आदि होते हैं, तब शब्द क्या कृतक है अथवा कृतक नहीं है, बुद्धि नित्य है या क्षणिक है, इस प्रकार का संशय होने पर किया गया जो शब्द में कृतकत्व का निर्णय और बुद्धि में क्षणिकत्व का निर्णय है वह प्रतिज्ञा है। इस प्रकार हेतु और दृष्टान्त में भी यदि जिज्ञासा आदि का सद्भाव हो तो हेतु और दृष्टान्त के भी प्रतिज्ञा स्वरूप होने में कोई आपत्ति नहीं है।

मिति लोके सिद्धत्वात् । एवं साधनसमासवचनं हेतुलक्षणमाचक्षाणा वयं न साधनमाचक्ष्महे, कस्मात् ? साध्यतेऽनेनेति कृत्वा साधनमिति लोके सिद्धत्वात् । उपेत्य वाऽनुमाननिर्देशात् । लिङ्गं हि नः साधनम्, तच्च निर्दिष्टमिति ।

यत्तूक्तम्—वीतावीतभेदे सति पञ्चधा साधनभावादिति, अत्र ब्रूमः—अयुक्तमेतत् । कस्माद् ? समासग्रहणसामर्थ्याद् । अतएव समासग्रहणं क्रियते, साधनस्वरूपाभिधानमात्रं हेतुरिति यथा विज्ञायते । प्रपञ्चस्त्ववयवान्तराणीति । एतेन विस्तरप्रतिषेधप्रसङ्गः प्रत्युक्तः । कथम् ? नहि समासशब्दस्यायमर्थ इति कृत्वा ।

---

यह भी जो कहा कि साधनस्वरूप का उपदेश नहीं होने से हेतु का लक्षण नहीं बन पाया है। तो यह कथन भी असत् है; क्योंकि साधन का स्वरूप लोक में प्रसिद्ध है । अतः साधन के उपदेश की आवश्यकता नहीं है। जैसे—साध्यवान् के रूप में ईप्सित जो पक्ष वह प्रतिज्ञा है । ऐसा प्रतिज्ञा का लक्षण कहते हुए आप साध्य का स्वरूप नहीं कहते; क्योंकि जो साधन के योग्य है, वह साध्य है, यह लोक में प्रसिद्ध है। इसी तरह साधनसमासवचन हेतु है, ऐसा हेतु का लक्षण करते हुए हम साधन का स्वरूप नहीं कहते हैं। क्योंकि 'साध्यतेऽनेन' इस व्युत्पत्ति के अनुसार जिससे कोई वस्तु सिद्ध की जाय वह साधन है, यह बात भी लोक में प्रसिद्ध है । अतः हेतुलक्षण कहते समय साधनस्वरूप का उपदेश अपेक्षित नहीं है । अथवा साधन का उपदेश हुआ है ऐसा स्वीकार कर अनुमान का निर्देश किया गया है । क्योंकि हमारे यहाँ लिङ्ग ही साधन है, और उसका निर्देश हो चुका है । अतः पूर्वोक्त हेतु के लक्षण में कोई अनुपपत्ति नहीं है ।

यह जो कहा कि वीत और अवीत का भेद होने पर पाँच प्रकार का साधन होता है, अतः केवल लिङ्गमात्र का निर्देश होने पर भी हेतु का लक्षण पूर्ण नहीं होता है । इसलिये सविस्तर लिंग का संग्रह करने के लिए समासपद नहीं कहना चाहिए । यहाँ हम कहते हैं कि यह कथन भी ठीक नहीं है; क्योंकि समासग्रहण इसीलिये किया गया है कि साधनस्वरूप का कथनमात्र हेतु है, ऐसा बोध हो । जहाँ तक वीतावीत भेद से पाँच प्रकार के साधन का प्रपञ्च है, वह तो हेतु से अन्य अवयव हैं ऐसा जानना चाहिए ।

इससे यह जो कहा कि समासग्रहण करने से विस्तार के प्रतिषेध की प्रसक्ति हो जायेगी—यह कथन भी खण्डित हो गया ।

यत्पुनरेतवुक्तं, शब्दार्थकल्पनेऽनिष्टप्रसंगाद् दृष्टान्तलक्षणायोग इति, अस्तु तावच्छब्दो दृष्टान्तः। यत्तूक्तम्, उपनयलक्षणं बाध्यत इति, अनुपपन्नमेतद्। कस्माद्? असम्भवे सति सम्बन्ध्यन्तरे कार्यविज्ञानाद्। शब्देऽसम्भवादर्थे कार्यं विज्ञास्यामः। अथवा पुनरस्त्वर्थो दृष्टातः। यत्तूक्तमभिधेयस्य वाक्यानवयवत्वात्पञ्चावयवत्वविरोध इति अर्थेऽसम्भवाच्छब्दे कार्यं विज्ञास्यामः।

यदप्युक्तम्, प्रतिज्ञाहेत्वर्थाभिधानाद् दृष्टान्तोपनयनिगमनानां नावयवान्तरत्वमिति-अयमदोषः। कस्मात्? अप्रतिज्ञानात्। न ह्येतदस्माभिः प्रतिज्ञायते। किं तर्हि? प्रमेयवचनं प्रतिज्ञा। प्रमाणरूपमात्रवचनं हेतुः। तस्य प्रमेयसहभावित्वनिदर्शनं दृष्टान्तः। साध्यदृष्टान्तयोर्धर्मसामान्यादेक-

---

प्रश्न— क्यों?

उत्तर— इसलिए कि समासशब्द का विस्तारप्रतिषेधरूप अर्थ हो नहीं है। समासशब्द इतनामात्र बतलाने के लिये है कि साधनस्वरूप का अभिधानमात्र हेतु है।

यह जो कहा कि 'दृष्टान्त के रूप में शब्द या अर्थ की कल्पना करने पर अनिष्ट प्रसङ्ग हो जाने से दृष्टान्त का लक्षण नहीं बन सकता है' तो यहाँ शब्द ही दृष्टान्त रहे। यह जो कहा कि शब्द को दृष्टान्त रखने पर उपनय का लक्षण बाधित हो जाता है, तो यह कथन अनुपपन्न है; क्योंकि असम्भव की स्थिति में किसी दूसरे सम्बन्धी में कार्य जाना जाता है। अर्थात् शब्द में दृष्टान्तत्व असंभव होने पर अर्थ में दृष्टान्त के कार्य को जानेंगे।

अथवा अर्थ ही दृष्टान्त रहे। इस पर यह जो कहा कि 'वाक्य का अवयव अर्थ नहीं हो सकता इसलिये एक अवयव न्यून हो जाने से अनुमान का पञ्चावयवत्व बाधित हो जायगा' तो अर्थ में असम्भव होने पर शब्द में कार्य को जानेंगे?

जो तो यह कहा कि हेतु और प्रतिज्ञार्थ का अभिधान होने से दृष्टान्त-उपनय और निगमन पृथक् अनुमानाङ्ग नहीं हो सकेंगे, अर्थात् ये तीनों हेतु और प्रतिज्ञा में ही गतार्थ हो जायेंगे। तो यह दोष नहीं होगा। क्योंकि ऐसी प्रतिज्ञा नहीं है। अर्थात् अवयवों के सम्बन्ध में हम वैसी प्रतिज्ञा नहीं करते हैं।

प्रश्न— तो कैसा मानते है?

उत्तर— प्रमेय का वचन प्रतिज्ञा है, प्रमाणस्वरूपमात्र का वचन हेतु है,

क्रियोपसंहार उपनयः । समुदायस्य साध्यसिद्धये व्यापारनिर्देशो निगमनम् । तस्मादयुक्तमेतत् ।

किञ्चान्यत्—एकस्य साधनभावपरिकल्पना,[वत्]तत्परिकल्पने दोषाभावात् । यथा वाक्यम् एवञ्च तदर्थश्च । मुख्यौ शब्दार्थौ, तयोरभिन्नार्थत्वात् इत्यभ्युपगमात् । एवमेवार्थमभागमक्रमं च बुद्धाववस्थाप्य श्रोत्रग्राह्यत्वानित्यत्वप्रमेयत्वादिलक्षणानां शक्तीनामपोद्धारात् साध्यसाधनसमुच्चयरूपापन्नं वक्तारो भिन्नमाचक्षते । न चैकार्थधर्मत्वात् साध्यसाधनसमुच्चयाभिधानानामेकत्वमनुषज्यते । तथैकस्य साधनस्य साध्यधर्मतत्सहभावित्वलक्षणानां शक्तीनामभिधानं हेतुदृष्टान्तादिनाऽवयवान्तरं नः स्यात् । तत्र यदुक्तम्—प्रतिज्ञाहेत्वर्थाभिधानाद् दृष्टान्तोपनयनिगमनानां नावयवान्तरत्वमिति, एतदयुक्तम् । तस्मात् सूक्तं दशावयवो वीतः ।

---

हेतु का प्रमेय के साथ साहचर्य दिखाना दृष्टान्त है, साध्य और दृष्टान्त का सामान्यधर्म के कारण एक क्रिया में पर्यवसान होना उपनय है, और प्रतिज्ञादि समुदाय का साध्यसिद्धि के अनुकूल व्यापार निर्देश करना निगमन है। ऐसा हम मानते हैं। इसलिये उक्त दोष देना अयुक्त है।

और भी—जैसे अनुमान के प्रति प्रतिज्ञा और हेतु में साधनभाव की कल्पना की जाती है, वैसे दृष्टान्त आदि में भी साधनत्व की कल्पना करने में कोई दोष नहीं है। जैसे वाक्य अङ्ग है, वैसे उसका अर्थ भी अङ्ग होगा। प्रतिज्ञा और हेतु वाक्यरूप हैं, तथा दृष्टान्त आदि अर्थरूप हैं। शब्द और अर्थ दोनों ही मुख्य होते हैं। क्योंकि शब्द और अर्थ अभिन्न वस्तु हैं, ऐसा माना गया है। अतः भाग और क्रमरहित एक वस्तु को बुद्धि में अवस्थापित कर श्रोत्रग्राह्यत्व-अनित्यत्व-कृतकत्व-प्रमेयत्व आदिरूप शक्तियों का अपोद्धार द्वारा वक्ता जन साध्य साधन और समुच्चयरूपापन्न उन्हें भिन्न-भिन्न कहते हैं। ऐसा नहीं होता कि एकार्थविषयक होने से साध्यवचन (प्रतिज्ञा) साधनवचन (हेतु) और समुच्चयवचन (दृष्टान्तादि) सभी एक ही हो जायेंगे। अर्थात् इनका भेद अवस्थित रहेगा। एक ही साधन पक्षधर्मत्व का अभिधान होने से हेतु एवं साध्य साहचर्य का अभिधान होने से दृष्टान्त के रूप में भिन्न-भिन्न अवयव हमारे यहाँ होगा।

यह जो कहा कि प्रतिज्ञा और हेतु के अर्थ का अभिधान होने से दृष्टान्त-उपनय और निगमन पृथक् अवयव नहीं हो सकेंगे, यह कथन ठीक नहीं है। इसे पूर्व में बताया जा चुका है। इसलिये ठीक कहा गया कि वीत अनुमान के दश अवयव

तस्य पुरस्तात् प्रयोगं न्याय्यमाचार्या मन्यन्ते। किं कारणम्? अवीतलक्षणविरोधात्। अवीतस्य हि लक्षणं परिशेषतः साध्यानुग्रहः। तत्रा-न्वयादिना स्वरूपेणाधिगते प्रधानलक्षणे धर्मिणि परपक्षप्रतिषेधमात्रेणोप-संहारे क्रियमाणे परिशेषलक्षणं बाध्यते। कस्मात्? इह प्रतिषेधमात्रमा-दावुच्यते। तेन यथा हेतुविरोधात् परमाण्वादिभ्यो न व्यक्तमुत्पद्यते, तथा हेत्वभावात् प्रधानादपि नोत्पद्यते इति शक्यं कल्पयितुम्। अतस्तद्व्य-वच्छेदोऽपि चावीताद् गम्यते। तथा सति कः परिशेषः स्यात्? स्वरूपेण तु परिच्छिन्ने धर्मिणि उपसंहारो यथावदवकल्प्यते।

न चेत् परमाण्वादिभ्यो व्यक्तमुत्पद्यते परिशेषतः प्रधानादेव व्यक्त-मुत्पद्यते इति यथोक्तेभ्योऽन्वयादिभ्य इत्युक्तं भवति। तस्मात् प्राग्वीत-

---

होते हैं। वे हैं—जिज्ञासा-संशय-प्रयोजन-शक्यप्राप्ति और संशयव्युदास तथा प्रतिज्ञा-हेतु-दृष्टान्त-उपनय और निगमन। प्रथम पाँच व्याख्या अर्थात् स्वार्थानुमान की दृष्टि से हैं तथा प्रतिज्ञादि पाँच परार्थानुमान की दृष्टि से हैं।

उस वीत अनुमान का पहले प्रयोग न्यायोचित है ऐसा आचार्य लोग मानते हैं।

प्रश्न— क्या कारण है?

उत्तर—अवीतलक्षण में विरोध होने से अर्थात् वीत का लक्षण अवीत अनुमान से सर्वथा विरुद्ध है। क्योंकि परिशेषात् साध्य का बोध कराना अवीत का लक्षण है। अन्वय आदि के द्वारा प्रधानरूप धर्मी के स्वरूपतः अधिगत हो चुकने पर परपक्ष के प्रतिषेधमात्र से उपसंहार करने में परिशेष का लक्षण [स्वरूप] बाधित हो जाता है।

प्रश्न— कैसे?

उत्तर—यहाँ पर प्रतिषेधमात्र ही पहले कहा जाता है। जैसे विरुद्ध हेतु होने से परमाणु आदि से व्यक्त जगत् की उत्पत्ति नहीं होती है, वैसे प्रधानरूप हेतु का अभाव होने के कारण प्रधान से भी जगत् की उत्पत्ति नहीं होती है—ऐसी कल्पना की जा सकती है। अतः जैसे जगत् के कारण के रूप में परमाणु आदि का खण्डन हो जाता है, वैसे अवीत द्वारा प्रधान का भी खण्डन हो जाता है। ऐसी स्थिति में जब परमाणु भी खण्डित हो गया और साथ-साथ प्रधान भी खण्डित हो गया तो जगत् में कारण के रूप में क्या परिशेष हुआ?

वीत अनुमान द्वारा प्रधानरूप धर्मी के ज्ञात हो जाने पर अनुमान का उप-

प्रयोग इति सिद्धं सामान्यतोदृष्टादनुमानादतीन्द्रियाणामर्थानां समधिगम इति ।

आह—न, कारणान्तरतोऽनुपलभ्यमानानामग्रहणात् । यदि सामान्यतोदृष्टादनुमानात् सर्वपरोक्षमधिगम्यते इत्यभ्युपगम्यते,प्राप्तमिदम्-येषामप्यर्थानां कारणान्तरतोऽनुपलब्धिः तेषामपि तस्मादेव ग्रहणम् । तद्यथा—

अतिदूरात् सामीप्यादिन्द्रियघातान् मनोऽनवस्थानात् ।
सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्च ।। ७ ।।

तत्रातिदूरात् तावत्—तद्यथा प्रोड्डीनस्य शकुनेः । अतिसामीप्यादञ्जनप्रभृतीनाम् । इन्द्रियघाताच्छब्दादीनाम् । मनोऽनवस्थानाच्छकटादीनाम् । अभिभवात् सूर्यप्रकाशाद् ग्रहादीनाम् । समानाभिहारादनेकप्रदीपप्रभाणाम् । 'च' शब्दादैश्वर्ययोगाद् देवादीनाम् । न चार्हति भवितुम्, धर्मसामान्यानुपपत्तेः । तस्मादयुक्तम्-सर्वमतीन्द्रियमनुमानग्राह्यमिति ।

---

संहार यथोचित हो जाता है। अर्थात् यदि परमाणु आदि से व्यक्त की उत्पत्ति नहीं होती है तो परिशेषात् यथोक्त अन्वय आदि प्रमाण से प्रधान से ही व्यक्त उत्पन्न होता है-यह पक्ष सिद्ध हो जाता है। अतः पहले वीत का ही प्रयोग समुचित है। इस प्रकार सिद्ध हुआ कि अतीन्द्रिय पदार्थों का ज्ञान सामान्यतोदृष्ट अनुमान से होता है।

पूर्वपक्ष-सामान्यतोदृष्ट अनुमान से अतीन्द्रिय अर्थों का ग्रहण होता है, यह नहीं कह सकते हैं; क्योंकि कारणान्तर से अनुपलब्ध पदार्थों का ग्रहण नहीं देखा जाता है। अर्थात् यदि सामान्यतोदृष्ट अनुमान से सभी परोक्षपदार्थों का ग्रहण हो जाता है, यह माना जाय तो यह भी होने लगेगा कि जिन पदार्थों की अनुपलब्धि किसी और कारण से होती है, उनका भी ग्रहण सामान्योदृष्ट अनुमान से हो जाना चाहिये। जैसे—

अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्च ॥ ७ ॥

अर्थात् अत्यन्त दूरी के कारण आकाश में उड़ रहे पक्षी का, अत्यन्त सामीप्य के कारण लोचनस्थ अञ्जन आदि का, इन्द्रियदोष के कारण शब्द आदि का, मन की अनवधानता के कारण मार्ग से जाते हुए शकट आदि का, सूक्ष्म होने के कारण परमाणु आदि का, व्यवधान होने के कारण भूगर्भ में स्थित हिरण्य आदि का, सूर्य के तेज से अभिभूत होने के कारण ग्रह नक्षत्र आदि का, समान वस्तु के मिश्रण के

उच्यते—शक्यं तावत् कारणान्तरतोऽनुपलभ्यमानं किञ्चित् सामन्यतोदृष्टादनुमानादधिगन्तुम्। तद्यथा समीपावस्थितस्य शकुनेरयत्नेन चक्षुषा ग्रहणम्। यथा यथा तु विप्रकर्षं प्रतिपद्यते, प्रणिधाय चक्षुर्गृह्यते तावद् यावत् क्रमेणादर्शनमुपसम्प्राप्तः। तत्र देशविप्रकर्षे प्रचीयमानेऽदर्शनमुपचीयमानमवगम्यात्यन्तादर्शनमपि पश्चात् तद्धेतुकमनुमीयते।

तथा नातिसमीपावस्थितस्य द्रव्यस्यास्फुटमाकारमवधार्य पश्चाद् यथा यथाऽऽरादुपसंपद्यते, तथा तथा प्रतिपद्यमानदर्शनशक्तयोऽनुमातारः कृष्णसाराञ्जनप्रभृतीनामग्रहणमतिसामीप्यादनुमिमते। तथा गिरिसरित्-समुद्रसमीपवर्तिनं श्रवणप्रतिघातिनं प्राक् शब्दमुपलभ्य पश्चात्तस्मिन्नेव देशे शब्दमगृह्णानाः श्रवणोपघातमनुमिमते।

तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् (साध्यम्)॥ ६॥

---

कारण अनेक प्रदीपों की प्रभाओं का ग्रहण नहीं हो पाता है। कारिका में 'च' शब्द से ऐश्वर्य के कारण देवादि का ग्रहण नहीं होता है; यह भी संगृहीत हो गया। उपर्युक्त वस्तुओं का ग्रहण अनुमान द्वारा हो भी नहीं सकता है; क्योंकि उनमें सामान्य धर्म अनुपपन्न है। इसलिये सभी अतीन्द्रिय पदार्थ अनुमान ग्राह्य है; यह कथन अयुक्त है।

समाधान—कारणान्तर से अनुपलभ्यमान कुछ पदार्थ सामान्यतोदृष्ट अनुमान से जाना जा सकता है। जैसे समीप में पक्षी बिना प्रयत्न से चक्षुः से गृहीत हो जाता है। वह पक्षी जैसे-जैसे दूरी को प्राप्त करता जाता है, चक्षुः को संलग्न कर तब तक दिखाई पड़ता है, जब तक क्रमशः वह अदृश्य नहीं हो जाता है। यहाँ देश की दूरी के बढ़ते हुए पक्षी का अदर्शन भी बढ़ता जाता है। इसे जानकर पक्षी का अत्यन्त अदृश्य हो जाना भी दूरी की अत्यन्त वृद्धिहेतु से है—ऐसा बाद में अनुमान हो जाता है। ऐसे ही जो द्रव्य अत्यन्त समीप नहीं है, उसके धुंधले आकार को पहले जानता है, पीछे वह जैसे जैसे पास होता जाता है, वैसे-वैसे उस द्रव्य को देखने की शक्ति बढ़ती जाती है और अन्ततः अनुमानकर्ता जन आँख में लगे अञ्जन प्रभृति का अग्रहण अत्यन्त समीपता के कारण है—ऐसा अनुमान कर लेते हैं। इसी प्रकार गिरि-नदी-समुद्र के समीपवर्ती तथा श्रवण को प्रतिहत करने वाले शब्द को पहले उपलब्ध कर बाद में उसी गिरि आदि देश में शब्द का ग्रहण न करते हुए श्रवणेन्द्रिय के उपघात का अर्थात् बधिरता का अनुमान कर लेते हैं।

तस्मादपि चासिद्धमित्यनेनागमविषये सामान्यतोदृष्टस्यानवतारमाचष्टे। परोक्षमिति विषयं प्रतिनिर्दिशति। आप्तागमात् साध्यमिति विषयिणमाह।

एतदुक्तं भवति—तस्मादपि सामान्यतोदृष्टादनुमानाद् यन्न सिद्ध्यति, प्रत्यक्षग्राह्यमपि स्वयमदृष्टं कारणान्तरप्रतिबद्धविषयभावमत्यन्तपरोक्षं वा स्वर्गापवर्गदेवतादि धर्मसामान्यरहितं तदाप्तागमात् साध्यम्।

सर्ववादसिद्धिप्रसङ्गादप्रमाणमिति चेत्, स्यादेतत्—यदि तर्ह्यागमः प्रमाणी क्रियते, तेन प्रतिशास्त्रं येऽभियुक्तास्तेषां प्रामाण्यमित्यवश्यमभ्युपगन्तव्यम्। एवं सति सर्वाचार्यप्रामाण्यादनेकविकल्पविचित्रा तर्कवृत्तिरित्यपरिनिश्चिततत्वाद् भ्रान्तिः प्रसज्येत। तथा च सति जिज्ञासूनामपवर्गप्राप्तिविघातः स्यात्। तस्माद् भिषजेव भवता परोपदेशः प्रयुक्तो नास्मानयं प्रीणाति।

---

सामान्यतोदृष्ट से भी नहीं सिद्ध होने वाला परोक्ष पदार्थ आप्तागम से सिद्ध किया जाता है। 'तस्मादपि चासिद्धम्' इसके द्वारा यह कहा जाता है कि आगम विषय में सामान्यतोदृष्ट का अवतरण नहीं है। 'परोक्षम्' इसके द्वारा विषय का निर्देश किया गया है। तथा 'आप्तागमात् साध्यम्' इसके द्वारा विषयी का उल्लेख है।

यहाँ यह आशय हुआ—उस सामान्यतोदृष्ट अनुमान से भी को नहीं सिद्ध होता है अर्थात् प्रत्यक्षग्राह्य भी वस्तु जो स्वयं अदृष्ट हो, जैसे हिमालयस्थ ओषधि प्रभृति, अथवा किसी अन्य कारण से जिसका विषयभाव बाधित है, या जो अत्यन्त ही परोक्ष स्वर्ग-अपवर्ग-देवता आदि सामान्यधर्म से रहित है, वह आप्त आगम से सिद्ध किया जाता है।

शङ्का— सामान्यतोदृष्ट अनुमान से नहीं सिद्ध हो सकने वाला परोक्ष पदार्थ यदि आगम से सिद्ध माना जाय तो सभी वादों की सिद्धि प्रसक्त हो जायगी, अतः आगम में प्रामाण्य नहीं माना जा सकता। अर्थात् परोक्ष पदार्थ की सिद्धि में यदि आगम को प्रमाण किया जाय तो प्रत्येक शास्त्र में जो अभियुक्त हैं, उन सभी का प्रामाण्य अवश्य मानना होगा। ऐसी स्थिति में सभी आचार्यों के प्रमाण स्वरूप होने से उनकी अनेक (विभिन्न) प्रकार की विकल्पनाओं से विचित्र तर्कवृत्ति के कारण तत्त्व का विनिश्चय नही हो सकेगा और भ्रान्ति प्रसक्त हो (फैल) जायगी। ऐसी स्थिति में

एतच्चायुक्तम् । कस्मात् ? आप्तलक्षणस्यानवधारितत्वात् । व्यपगत-रागादिदोषाणामसन्दिग्धमतीनामतीन्द्रियार्थद्रष्टृणामीश्वरमहर्षीणामाप्तत्वमाचक्ष्महे, न सर्वेषाम् । यदि चान्योऽप्येवंधर्मोऽस्ति, भवतु प्रमाणम् ।

किञ्चान्यत्, स्वविषये च तत्प्रामाण्यस्यादोषवत्त्वात् । यस्य खल्वपि यो विषयस्तस्य तस्मिन् विषये वचोऽन्तरेणापि साधनं प्रमाणमित्यवश्यमभ्युपगन्तव्यम् । इतरथा प्रतिशास्त्रमाचारस्थितिनियमानामदृष्टार्थानामप्रतिपत्तिः स्यात् । एतेनाखिलल्लिङ्गादागमोऽर्थान्तरम् । यस्मान्महताभिधानेन युक्तिरन्विष्यते, तस्माद् युक्त्यपेक्षाल्लिङ्गादागमोऽर्थान्तरमिति ।

आह—न, अन्वयव्यतिरेकाभ्यामधिगमहेतुत्वात् । यथा कृतकत्वादिधर्मोऽनित्यत्वादौ विषये दृष्टस्तदभावे चादृष्ट इत्यनित्येऽर्थे निश्चयमा-

---

जिज्ञासुओं को अपवर्गप्राप्ति में विघात हो जायगा। इसलिये चिकित्सक के समान आपने दूसरों को उपदेश दिया है; जो हमें प्रीतिकर नहीं हो सकता है।

समाधान—उक्त शंका अयुक्त है। क्योंकि आप्तलक्षण का अवधारण सबमें नहीं है। जिनमें रागादि दोष दूर हो गया है, एवं जिनकी बुद्धि सन्देह से सर्वथा रहित है, तथा जो अतीन्द्रिय विषय को देखने वाले हैं; ऐसे ईश्वर और महर्षियों को ही हम आप्त कहते हैं, सबको नहीं। यदि इस प्रकार के गुणों से सम्पन्न और भी कोई है, तो वह भी प्रमाण हो, इससे हमें आपत्ति नहीं है।

एवं—अपने विषय में उसका प्रामाण्य मानने पर कोई दोष नहीं है। अर्थात् जिसका जो विषय है, उसका वचन उस विषय में साधन के बिना भी प्रमाण है, यह अवश्य स्वीकार करना चाहिये। अन्यथा प्रत्येक शास्त्र में प्रतिपादित अदृष्टार्थक आचार और स्थिति तथा नियमों का ज्ञान नहीं हो सकेगा। इससे सिद्ध हुआ कि समस्त लिङ्ग से आगम एक दूसरी वस्तु है। अर्थात् चूंकि बड़े उद्घोष के साथ अनुमान में युक्ति की अपेक्षा की जाती है, इसलिये युक्तिसापेक्ष लिङ्ग (अनुमान) से आगम भिन्न वस्तु है।

शङ्का—आगम भी अन्वय और व्यतिरेक के द्वारा अधिगम का हेतु होता है। अर्थात् जैसे कृतकत्व आदि धर्म अनित्यत्व आदि विषय के रहने पर देखा जाता है और जहाँ अनित्यत्व का अभाव है वहाँ नहीं देखा जाता है, इसलिये कृतकत्व हेतु शब्दविषय में अनित्यत्व का निश्चय करा देता है। ऐसे ही शब्द भी अपने अर्थ में देखा जाता है और उस जाति के अन्य अर्थ में नहीं देखा जाता है, इसलिये वह

दधाति, एवं शब्दोपि स्वार्थे दृष्टोऽन्यत्र तज्जातीये न दृष्टः प्रतिपत्तिहेतुर्भवति। तस्मादनुमानादभिन्न एवायमिति।

उच्यते—चन्द्रादिष्विदानीमसाधारणविषयेषु का प्रतिपत्तिः स्यादिति।

आह—अवयवापेक्षत्वाच्चन्द्रशब्दो ह्यनेकेषु अवयवेषु वर्तते, जातिद्रव्यगुणक्रियासु च, तथा डित्थादिशब्दः, तस्मादेवंजातीयकानामपि चानुमानादभेदः।

उच्यते—स्वर्गादीनां तर्हि कथमनुमानत्वमिति ?

आह—आप्तवचोऽविसंवादसामर्थ्यात्। यथा हैरण्यकप्रभृतीनामाप्तानां वाक्यमव्यभिचारि एवमीश्वरमहर्षयोपि चाप्ताः। तस्मादेषामपि वाक्यमव्यभिचारीति शक्यमत्रापि सामान्यविषयत्वं कल्पयितुम्। एवमनुमानमेवमागम इति।

---

शब्द स्वार्थ के बोध का हेतु होता है। इससे सिद्ध होता है कि आगम अनुमान से भिन्न नहीं है; किन्तु अभिन्न ही है।

उत्तर—यदि अन्वयव्यतिरेक के बल से शब्द अर्थ का बोधक हो तो चन्द्र आदि असाधारण विषयों में चन्द्रशब्द से बोध कैसे होगा ?

शङ्का—चन्द्रशब्द अवयवसापेक्ष है, इसलिये अनेक अवयवों में वह प्रयुक्त होता है, जैसे जाति द्रव्य गुण और क्रिया में। अर्थात् चन्द्रादिशब्द जैसे जातिबोधक द्रव्यबोधक गुणबोधक और क्रियाबोधक है। वैसे ही डित्थ आदि शब्द भी अनेक अवयवों में प्रयुक्त होता है। अतः चन्द्रादिशब्द भी असाधारणविषयक नहीं है; किन्तु साधारणविषयक ही है। इसलिये अन्वयव्यतिरेक सुलभ होने से इस प्रकार के शब्द का भी अनुमान से अभेद है।

उत्तर—तब स्वर्गादि का बोध अनुमान कैसे होगा ? क्योंकि स्वर्गादि कोई जाति, द्रव्य, गुण, क्रियारूप अवयव नहीं होता।

शङ्का—आप्तजनों के वचनों में अविसंवाद (अविरोध) के कारण स्वर्गादि विषय का प्रतिपादक आगम अनुमान ही है। अर्थात् जैसे-हिरण्यगर्भ प्रभृति आप्तों का वचन अव्यभिचारी है, वैसे ही ईश्वर महर्षि भी आप्त हैं और उनके वचन भी अव्यभिचारी हैं। अतः यहाँ भी सामान्यविषयत्व की कल्पना की जा सकती है। अर्थात् स्वर्गादि शब्द भी

उच्यते—यदुक्तमन्वयव्यतिरेकाभ्यामधिगमहेतुत्वाच्छब्दोऽनुमानमिति, अत्र ब्रूमः—न, अप्रतिज्ञानात्। न हि वयं व्यवहारानुपातिनां वृक्षादीनामागमत्वमाचक्ष्महे, किं तर्हि ? स्वर्गादीनामत्यन्तपरोक्षविषयाणाम्। तस्मादप्रतिज्ञानादनुपालम्भोऽयमिति।

उपेत्य वा वक्त्रपेक्षत्वात्। अथवोपेत्यापि सर्वशब्दानामागमत्वमनुमानादर्थान्तरभावं ब्रूमः। तथा हि कृतकत्वादिति लिङ्गं चाण्डालकापालिकैरपि प्रयुज्यमानं साहचर्यापेक्षं निश्चयमादधाति, न वक्तृविशेषमपेक्षते। वक्तृविशेषापेक्षस्तु शब्दः। तस्मान्न लिङ्गम्।

किं चान्यत्—विपर्ययात्। न हि लिङ्गम् देशान्तरे विपर्येति शब्दस्य तु दृष्टो विपर्ययः। स एव हि शब्दो देशान्तरे कालान्तरे तु स्वार्थं न प्रत्याययति अर्थान्तरं च प्रशंसति। सम्बन्धानुपलब्धेरिति चेत्, स्यादेतत्-

---

असाधारणविषयक न होकर सामान्यविषयक ही हैं। इस प्रकार जैसा अनुमान है वैसा ही आगम भी है। अतः अनुमान से आगम भिन्न नहीं है।

समाधान— यह जो कहा कि अन्वय और व्यतिरेक के द्वारा अधिगम का हेतु होने से शब्द भी अनुमान ही है, उस पर हमारा कहना है कि ऐसी बात नहीं है क्योंकि हमारी वैसी प्रतिज्ञा नहीं है। अर्थात् हम व्यवहार में आने वाले वृक्षादिशब्दों को आगम नहीं कहते हैं। किन्तु अत्यन्त परोक्ष विषय को बतलाने वाले स्वर्गादिशब्दों को ही आगम कहते हैं। अतः वृक्षादिशब्दों के बारे में प्रतिज्ञा नहीं होने से उक्त उपालम्भ नहीं दिया जा सकता है कि अन्वयव्यतिरेक द्वारा अधिगम का हेतु होने से शब्द भी अनुमान ही है। क्योंकि स्वर्गादिशब्द को आगम कहते हैं और उसमें अन्वयव्यतिरेक सम्भव नहीं है।

अथवा सभी शब्दों को आगम मानकर भी अनुमान से भिन्न आगम को हम कहते हैं। क्योंकि आगम में वक्तृविशेष की अपेक्षा होती है। और अनुमान में वैसी अपेक्षा नहीं रहती है। जैसे, 'कृतकत्वात्' यह हेतु चाण्डाल और कापालिकों के द्वारा भी प्रयुक्त होता हुआ साध्य के साथ साहचर्यमात्र की अपेक्षाकर साध्य का निश्चय करा देता है। इस प्रकार हेतु किसी विशेष वक्ता की अपेक्षा नहीं करता है; किन्तु शब्द तो बोध कराने के लिये वक्तृविशेष की अपेक्षा करता है। इसलिये शब्दप्रमाण लिङ्ग या अनुमान नहीं हो सकता है।

सम्बन्धान्तरं देशान्तरेऽनुपलक्षितम्; तस्माच्छब्दार्थविपर्यय इति। एतदनुपपन्नम्—लिङ्गवैधर्म्यात्। न हि प्रत्यक्षाभिमतस्य लिङ्गिन उपलब्धौ गवादेर्लिङ्गं नोपलभ्यते। शब्दस्तूपलभ्यमानो (ने) गवादौ नोपलभ्यते। तस्मान्न लिङ्गम्।

किञ्चान्यत्—देशनियमात्। न हि लिङ्गस्य देशनियमो दृष्टः। अस्ति तु शब्दस्य देशनियमः। तद् यथा शवतिर्गतिकर्मा काम्बोजेष्वेव भाष्यते, रंहतिः प्राच्येषु। तथा दातिर्लवनार्थः दात्रमुदीच्येषु नान्यत्र। तस्मान्न शब्दो लिङ्गम्।

किञ्चान्यत्—इष्टतो विनियोगात्। स्वाभाविकं लिङ्गम्। न हि धूमोऽग्नेरपकृष्य शक्यतेऽप्सु वायावाकाशेऽन्यत्र वा निवेशयितुम्। शब्दस्तु यत्र यत्र वक्तुरभिप्रायस्तत्र तत्र विनिवेश्यते। यथा वृद्ध्यादयः शब्दाः स्वार्थाभ्युच्चयादिषु प्रसिद्धा आदैक्षु विनिवेश्यन्ते। तस्मान्न ते लिङ्गम्।

---

और भी—शब्द में देशविपर्यय भी हो जाता है। अर्थात् लिङ्ग देशान्तर में भी नहीं बदलता है; किन्तु शब्द का तो विपर्यय देखा गया है; क्योंकि वही शब्द देशान्तर में और कालान्तर में अपने अर्थ को नहीं प्रतीत कराता है, बल्कि अन्य अर्थ का बोध कराता है।

यदि कहें कि 'देशान्तर में उस शब्द का अपने अर्थ के साथ सम्बन्धग्रह नहीं होने से वह अपने अर्थ का बोध नहीं कराता है। अर्थात् देशान्तर में सम्बन्ध अज्ञात रहता है, इसीलिये वहाँ शब्द और अर्थ का विपर्यय हो जाता है' तो यह कथन अनुपपन्न है। क्योंकि लिङ्ग से शब्द में वैधर्म्य है; क्योंकि प्रत्यक्ष से अवगत गवादि लिङ्गी की उपलब्धि होने पर उसका लिङ्गभूत सास्नावत्त्व भी उपलब्ध हो ही जाता है। ऐसा नहीं होता कि गौ की उपलब्धि हो और उसका सास्नादि लिङ्ग न उपलब्ध होता हो। गोशब्द तो प्रत्यक्ष गवादि के उपलभ्यमान होने पर भी श्रवणगोचर नहीं होता है। इसलिये शब्द लिङ्ग से भिन्न है।

और भी—शब्द में देश का नियम होता है। अर्थात् लिङ्ग में देश का नियम नहीं देखा गया है; किन्तु शब्द में तो देशनियम है। जैसे, शवधातु गतिअर्थ में काम्बोज देश में ही प्रयुक्त होता है और प्राच्य देश में रंहधातु प्रयुक्त होता है। तथा लवनार्थक दाधातु से निष्पन्न दात्र शब्द उदीच्यों में तो प्रयुक्त होता है, अन्यत्र नहीं। अतः शब्द लिङ्ग नहीं है।

सर्वाभिधानशक्तित्वाच्छब्दस्यादोष इति चेत्, स्यान्मतम्—सर्वाभिधानशक्तिः शब्दः सर्वाभिधेयशक्तिश्चार्थस्तयोः पुरुषव्यापारेण शक्त्यवच्छेदः क्रियते। कथम्? अयमेव शब्दोऽस्यार्थस्य प्रत्यायको भवतु। अयमेव चार्थोऽनेन शब्देनाभिधीयताम्। एतावति पुरुषव्यापारः। तस्माच्छब्दस्य स्वाभाविकः सम्बन्धो वक्त्रपेक्षया व्यज्यत इति।

एतदप्यनुपपन्नम्। कस्मात्? सुतरामनुमानादर्थान्तरत्वप्रसङ्गात्। एवमपि कल्पयित्वाऽनुमानात् सुतरां शब्दस्यार्थान्तरत्वमापद्यते। कस्मात्? न हि यथा वक्त्रपेक्षया सर्वार्थस्य सतः शब्दस्य शक्त्यवच्छेदस्तथा सर्वार्थं लिङ्गं वक्त्रपेक्षयाऽर्थान्तरादवच्छिद्यते। यथा चैकः शब्दो जगदित्येवमुदितः

---

और भी—शब्द का इच्छानुसार विनियोग होने से भी शब्द लिङ्ग नहीं है। लिङ्ग स्वाभाविक होता है। ऐसा नहीं होता है कि धूम को अग्नि से अलगकर उसे जल में, वायु में, आकाश में या अन्यत्र कहीं निवेशित किया जा सके। शब्द तो जहाँ-जहाँ वक्ता का अभिप्राय होता है, वहाँ वहाँ विनिवेशित कर दिया जाता है। जैसे, वृद्धि आदि शब्द अभ्युच्चय (बढ़ना) आदि अर्थ में प्रसिद्ध हैं, फिर भी उन्हें व्याकरण-शास्त्र में आत् और ऐच् में प्रयुक्त किया जाता है। अतः वे शब्द लिङ्ग नहीं है।

यदि कहो कि शब्द में सबका अभिधान (बोध) करने की शक्ति होने से इच्छानुसार पुरुष द्वारा विनियोग किये जाने में कोई दोष नही है। अर्थात् ऐसा माना जाय कि सभी अर्थों का अभिधान करने की शक्ति शब्दों में है और सभी शब्दों द्वारा अभिधेय होने की शक्ति अर्थ में है; किन्तु पुरुष व्यापार द्वारा उनकी शक्तियों को सीमित किया जाता है।

वादी—किस प्रकार?

प्रतिवादी—यही शब्द इस अर्थ का बोधक हो और यही अर्थ इस शब्द के द्वारा बोधित हो। यही प्रकार है, जिससे शब्द और अर्थ की शक्ति पुरुष द्वारा सीमित कर दी जाती है। इतने में ही पुरुषव्यापार है। अतः शब्द का भी लिङ्ग के समान ही अर्थ के साथ स्वाभाविक सम्बन्ध है और वह वक्ता की अपेक्षा से उस उस अर्थ में अभिव्यक्त होता है।

वादी—यह कथन भी अनुपपन्न है। क्योंकि ऐसी स्थिति में सुतराम् (अनायास ही) अनुमान से शब्द अर्थान्तर सिद्ध होने लगेगा। अर्थात् ऐसी कल्पना करने पर भी अनुमान से शब्द सुतराम् अर्थान्तर हो जाता है।

पुरुषविनियोगापेक्षः सर्वमर्थमभिधातुं समर्थस्तथैकं लिङ्गं कयाचिद् युक्त्या (न) सर्वार्थप्रत्यायनसमर्थम् । तस्मान्न शब्दो लिङ्गम् ।

यत् पुनरेतदुक्तम्—चन्द्रादीनामवयवापेक्षं सामान्यमभ्युपगम्यते । तदयुक्तम्, असाधारणत्वात् । अनुमानाभावे शब्दप्रसिद्धोऽर्थ इति, व्याघातः ।

किञ्चान्यत्—जात्यादिसाध्यत्वात् । जातिगुणद्रव्यक्रियाणां च परस्परतोऽर्थान्तरत्वं समुदायश्च साध्यः । तस्मादयुक्तमेषां तदपेक्षया सामान्यविषयत्वम् । यदप्युक्तमाप्तवादाविसंवादसामान्यात् स्वर्गादिशब्दानामनुमानत्वमिति, अत्र ब्रूमः—एतदप्यनुपपन्नम् । कस्मात् ? प्रमाणविषयत्वात् । सत्यमस्त्येषां सामान्यपरिकल्पना, सा तु प्रमाणविषया न तु

---

प्रश्न—कैसे ?

उत्तर—इसलिये कि जैसे सर्वार्थक होते हुए भी शब्द की शक्ति वक्ता की अपेक्षा से सीमित हो जाती है, वैसे सर्वार्थक लिङ्ग की शक्ति वक्ता की अपेक्षा से अर्थविशेष में सीमित नहीं की जाती है । जैसे 'जगत्' यह एक शब्द उच्चरित होकर पुरुष द्वारा विनियोग किये जाने पर सभी अर्थ को कहने में समर्थ होता है, वैसे ही एक कोई भी लिङ्ग किसी भी युक्ति से सर्वार्थ की प्रतीति कराने में समर्थ नहीं है । इसलिये शब्द लिङ्ग नही है ।

यह जो कहा कि चन्द्रादि शब्दों को जाति-द्रव्य-गुण और क्रियारूप अवयवों की अपेक्षा से सामान्य स्वीकार किया जाता है, यह अयुक्त है । क्योंकि एकार्थवाचक होने से चन्द्रादिशब्द सर्वथा असाधारण हैं, और यहाँ अन्वयव्यतिरेक नहीं बन सकता है । इस प्रकार अनुमान न होने से शब्दप्रमाण से ही अर्थबोध होता है । अतः उक्त कथन व्याहत है ।

और भी—जाति आदि साध्य हैं । अर्थात् जाति-गुण-द्रव्य और क्रिया परस्पर में भिन्न अर्थ हैं और इनका समुदाय ही चन्द्रादिशब्द का साध्य (बोध्य) होगा । अतः यह कथन अयुक्त है कि चन्द्रादिशब्द जात्यादि की अपेक्षा से सामान्यविषयक हो जायगा ।

और यह जो कहा कि 'जैसे आप्त जनों का वचन अव्यभिचारी होता है, वैसे स्वर्गादिविषयक ईश्वर-महर्षियों का वाक्य भी अव्यभिचारी होने से सामान्यविषयक हैं, अतः स्वर्गादिशब्द भी अनुमान है ।' इस पर हमारा कहना है कि यह भी अनुपपन्न है । क्योंकि इनके वचन प्रमाणविषयक नहीं हैं । अर्थात् यह सत्य है कि आप्त

प्रमेयविषया । प्रमेयं तु सामान्यमनुमानस्येत्ययमभ्युपगमो वः । तच्चासाधारणत्वात् स्वर्गादीनां प्रतिषिद्धम् । तस्मात् त्यज्यतामियमाशङ्काऽनुमानमेवागम इति ।

अन्यः पुनरनुमानागमयोरभेदप्रतिज्ञ इदमाह—स्वर्गादयः शब्दा न प्रमाणम् । कस्मात् ? प्रमाणान्तरेण तदर्थानुपलब्धेः । यस्य हि शब्दस्यार्थः प्रत्यक्षतोऽनुमानतो वा नोपलभ्यते, स न प्रमाणम् । इतरस्तु प्रमाणम् । तद्यथा नद्यास्तीरे पक्वमाम्रवनं, पथि गुडशकटं विपर्यस्तमिति । न च स्वर्गादिशब्दानामर्थः प्रमाणान्तरेणोपलभ्यते । तस्माद् यथा विभुरात्मा, सर्वत्र सुखादिसंभवात् इत्येवमादयो बौद्धं प्रति धर्म्यसिद्धत्वादयथार्थास्तथा वेदशब्दा अपि प्रायेणेति[1] ।

एतत्तु न युक्तरूपम् । कस्मात् ? अन्यायेन सर्वशब्दापवादात् । का ह्यत्र युक्तिर्यदस्मदादिभिरनुपलभ्यमानार्थं प्रमाणभूतानामपि वाक्यमयथार्थं

---

जनों एवं महर्षियों के वचन समानरूप से अव्यभिचारी हैं । किन्तु ये वचन प्रमाणरूप हैं, न कि प्रमेयरूप हैं । अनुमानप्रमाण के लिये तो प्रमेय को सामान्यरूप होना चाहिये, ताकि लिङ्ग और साध्य का अन्वय-व्यतिरेक बन सके । यह आपको मान्यता है । यह सामान्यरूपता स्वर्ग आदि वस्तुओं (प्रमेयों) में नहीं है । अतः यह आशङ्का छोड़ दें कि आगम अनुमान ही है ।

अन्य प्रतिवादी भी अनुमान और आगम को अभिन्न मानने वाला कहता है—स्वर्ग आदि शब्द प्रमाण नहीं हैं; क्योंकि अन्य प्रमाणों से उसके अर्थ की उपलब्धि नहीं होती है । जिस शब्द का अर्थ प्रत्यक्ष या अनुमान से उपलब्ध नहीं होता है, वह शब्द प्रमाण नहीं है । किन्तु उससे भिन्न शब्द प्रमाण है, जिसका अर्थ प्रमाणान्तर से कहीं उपलब्ध होता है । जैसे नदी के किनारे पका हुआ आम्रवन है, मार्ग में गुड़लदी गाड़ी लुढ़क गयी है' इत्यादि वाक्य प्रमाण होंगे, क्योंकि इनके अर्थ को प्रत्यक्ष से जाना जा सकता है । किन्तु स्वर्गादिशब्दों का अर्थ प्रमाणान्तर से उपलब्ध नहीं है । अतः ये शब्द प्रमाण नहीं हैं । इसलिये जैसे, 'विभुः आत्मा, सर्वत्र सुखादिसंभवात्' इत्यादि शब्द बौद्ध के प्रति अप्रमाण हैं; क्योंकि उसके यहाँ आत्मारूपी धर्मी असिद्ध है । अतः जैसे उपर्युक्त शब्द अप्रमाण है, वैसे ही वेदशब्द भी प्रायः अप्रमाण हैं ।

---

१. अत्रत्यं पाठान्तरं विश्रृङ्खलमिवावभाति ।

स्यात् ? सर्वेण चावश्यं कश्चिदाप्तस्तस्य च वाक्यमदृष्टार्थमित्यभ्युपगन्तव्यम् । अतोऽयं तवात्रापि समानः प्रसङ्गः ।

न च प्रमाणं स्वार्थसिद्धये प्रमाणान्तरमपेक्षते । तत्र यदि शब्दस्य प्रमाणान्तरापेक्षं यथार्थत्वमाश्रीयते, तेन न केवलं स्वर्गादयः, किन्तर्हि ? शब्दा एवाप्रमाणमिति प्राप्तम् । अनुमानस्य प्रमाणान्तरनिरपेक्षस्य गमकत्वाभ्युपगमादागमस्य ततोऽर्थान्तरत्वं सुतरां प्रसज्यते। तस्माद् युक्तागमविरोधिन एवंविधा नास्तिकवादाः श्रेयोर्थिभिर्दूरादपोह्या इति स्थितमेतत्—अनुमानादसिद्धं वस्तु यत्, तदाप्तागमात् साध्यमिति ।

एवमस्य त्रिविधस्य प्रमाणस्यैन्द्रियकं कारणान्तरतोऽनुपलभ्यमानं च प्रमेयं व्याख्यातम् । एतस्मात्तु यदन्यत् तदसदिति प्रत्यवगन्तव्यम् ॥

आह—यद्येवं, प्रधानस्यासत्त्वप्रसङ्गः । अनुपलब्धौ कारणान्तरत्वा-

---

यहाँ 'प्रायेण' यह शब्द इसलिये कहा कि वेद के स्वर्ग आत्मा ईश्वर आदि शब्द ही बौद्ध से यहाँ अप्रमाण हैं; बाकी शब्द प्रमाण भी हैं ।

सिद्धान्ती—प्रतिवादी का उक्त कथन युक्त नहीं है । क्योंकि अन्याय से सभी शब्दों का अपवाद (अप्रामाण्य) हो जायेगा । अर्थात् बिना न्याय या तर्क के यदि वैदिक शब्द अप्रमाण होगा तो सभी शब्द अप्रमाण हो जायेंगे । क्योंकि इसमें क्या युक्ति है कि हमारे द्वारा जिसके अर्थ की उपलब्धि नहीं होती है, ऐसा प्रमाणभूत आप्तों का भी वाक्य अप्रमाण हो ? सभी को अवश्य ही यह स्वीकार करना होगा, कि 'कोई आप्त है और उसका वचन अदृष्टार्थक है ।' इसलिये यहाँ यह दोष समानरूप से तुम्हारे ऊपर भी है ।

एवं, कोई भी प्रमाण अपने अर्थ की सिद्धि के लिये प्रमाणान्तर की अपेक्षा नहीं करता है । यहां यदि शब्द की प्रमाणता अन्य प्रमाण की अपेक्षा पर अपनायी जाय तो, उससे न केवल स्वर्ग आदि शब्द प्रत्युत शब्दमात्र अप्रमाण हैं, यह प्रसङ्ग हो जायेगा ।

एवं अनुमानप्रमाण अन्यप्रमाण की बिना अपेक्षा किये गमक होता है, ऐसा स्वीकृत होने से परसापेक्ष आगम अनुमान से भिन्न है, यह बात अनायास सिद्ध हो जाती है । क्योंकि निरपेक्ष और सापेक्ष परस्पर अभिन्न कैसे हो सकते हैं ?

इसलिये सर्वथा युक्त आगमों के विरुद्ध इस प्रकार के नास्तिक वादों का दूर से ही परित्याग श्रेय चाहने वाले व्यक्ति को कर देना चाहिये । अतः यह स्थिर हो गया कि अनुमान से असिद्ध जो वस्तु, उसका साधन आगमप्रमाण से होता है ।

नुपलब्धेः । तद्द्विविध प्रत्यक्षाविषयत्वे सत्यतिदूरादिभिरनुपलब्धिकारणैर्नो[1]-पलभ्यते । तन्न तावत् अतिदूरात् सामीप्याद् व्यवधानाच्चास्याग्रहणम् । कस्मात् ? विभुत्वात् । नेन्द्रियघातात्, अविकलेन्द्रियैरग्रहणात् । न मनसोऽनवस्थानात्, अवस्थितमनोभिरग्रहणात् । न सौक्ष्म्यात्, शशविषाणादीनां सत्त्वप्रसङ्गात् । नाभिभवात्, असंभवात् । न समानाभिहारात्, एकत्वात् । तस्मात् कारणान्तराभावतोऽनुपलभ्यमानस्यासत्त्वमिच्छतः प्रधानस्यापि शशविषाणवदसत्त्वप्रसङ्गः । अथैतन्नेष्यते, कारणान्तरं तर्ह्यनुपलब्धौ वक्तव्यमिति ।

---

इस प्रकार इस त्रिविध प्रमाण का दो प्रकार का प्रमेय-एक ऐन्द्रियक दूसरा अतीन्द्रिय, जो कि अतिदूरत्व आदि कारणों से उपलभ्यमान नहीं होता, प्रतिपादित हुआ। इस प्रत्यक्ष, अनुमान और आगम से सिद्ध पदार्थों से अतिरिक्त जो कुछ है, वह असत् है, ऐसा जानना चाहिये।

शङ्का— त्रिविध प्रमाणों से अगम्य यदि असत् है, तो प्रधान में भी असत्त्व की प्रसक्ति हो जावेगी। क्योंकि प्रधान प्रत्यक्ष का अविषय होता हुआ अतिदूरत्वादि अनुपलब्धिकारणों से अनुपलभ्यमान नहीं है; किन्तु असत् होने के कारण शशशृङ्गादि के समान अनुपलभ्यमान है। अर्थात् प्रधान की अनुपलब्धि अतिदूरत्व के कारण या सामीप्य के कारण या व्यवधान के कारण नहीं है, क्योंकि वह विभु है। इन्द्रियघात से भी अनुपलब्धि नहीं है, क्योंकि स्वस्थ इन्द्रियवाले व्यक्ति के द्वारा भी वह गृहीत नहीं होता है। मन के अनवस्थित (चञ्चल) होने से भी प्रधान का अग्रहण नहीं है, क्योंकि सावधान मन की स्थिति में भी प्रधान गृहीत नहीं होता है। सूक्ष्म होने के कारण भी प्रधान का अग्रहण नहीं है, क्योंकि तब शशविषाण को भी सत् मानना पड़ जायेगा। कारण, उसके लिये भी कहा जा सकता है कि सूक्ष्म होने के कारण उसका उपलम्भ नहीं होता है। किसी अन्य पदार्थ से अभिभूत होने के कारण भी प्रधान का अग्रहण नहीं हो सकता है; क्योंकि सर्वातिशायी प्रधान का अभिभव असम्भव है। समानाकार वस्तु के मिश्रण के कारण भी प्रधान का अग्रहण नहीं माना जा सकता है; क्योंकि प्रधान एक ही होता है, दूसरा प्रधान होता नहीं, जिसका मिश्रण हो जाय। इसलिये अतिदूरत्वादि कारणों के अभाव में अनुपलभ्यमान वस्तु को जो असत् कहता है, उसके यहाँ प्रधान भी शशविषाण के समान असत् हो जायेगा। यदि ऐसी बात नहीं है, अर्थात् प्रधान वस्तुतः सत् है; तो उसकी अनुपलब्धि का कारण बताना चाहिये।

---

१. र्न नोपलभ्यते इति पाठ उचितः।

